स्याद्वेदाध्ययन वाचनादि तदध्यायपुरुषस्याध्ययनान्तरपूर्वकं न सिध्यति अध्यापयितुरभावात् न च पुरुषस्य तात्वादिकरणग्रामव्यापाराभावात् स्वयं शब्दा ध्वनति ततो वेदस्य प्रथमोध्येता कर्त्तव्येदितव्य अपि च यद्वस्तु यद्धेतुकमन्वयव्यतिरेकाभ्यां प्रसिद्धं तज्जातीयमन्यदप्यदृष्टहेतुकं ततो हेतोर्भवतीति सम्प्र- तीयते यथेन्धनादेको ऽग्निरदृष्टस्तत्समानस्वभावोऽपरोऽप्यदृष्टहेतुक तत्समानहेतुक सम्प्रतीयते लौकिकेन च शब्देन समानधर्मा सर्वोपि वैदिक शब्द राशिस्ततो लौकिकवद्वैदिकोपि शब्दराशि पौरुषेय सम्प्रतीयतां स्यादेतद्वैदिके तु शब्देषु यद्यपि न पुरुषो हेतुस्तथापि पौरुषेयाभिमतशब्दसमानाविशिष्ट पदवाक्यरचना भविष्यति तत्र कथं तत्समानधर्मतामवलोक्य पुरुषहेतुकता तेषामनुमीयते तदेतदबालिशजल्पितं पदवाक्यरचना हि यदि हेतुमन्तरेणापी ष्यते तत आकस्मिकी सा भवेत् ततश्चाकाशादावपि सा सर्वत्र सम्भवेत् अहेतुकस्य देशादिनियमायोगात् न च सा सर्वत्रापि सम्भवति तस्मात्पुरुषएव तस्या हेतुरित्येष वश्यं प्रतिपत्तव्य अन्यच्च पुरुषस्य रागादिपरीतत्वेन यथावस्तुपरिज्ञानाभावात्तत्प्रणीत वाक्यमयथार्थमपि सम्भाव्यते इति अश्रद्धेय पुरुषो कीर्णं स च स्वयो पौरुषेयत्वाभ्युपगमेपि वेदवाक्यानांतदवस्थएव तथा हि स्वयं तावत्पुरुषो वेदस्यार्थं नावबुध्यते रागादिपरीतत्वात् नाप्यन्यत पुरुषान्तरात्तस्यापि रागादिपरीतत्वेन यथा तत्त्वमपरिज्ञानादथ जैमिनिप्रभृतिरपूर्वकालभावी पटुप्रज्ञ सम्यग्वेदार्थस्य परिज्ञाता स तत्र परिज्ञानमभ वदिति नहि सर्वेपि पुरुषा समानप्रज्ञा मेधादिगुणा इति वक्तुं शक्यं सम्प्रत्यपि प्रतिपुरुषं प्रज्ञादेस्तारतम्यस्य दर्शनात् ननु स जैमिनि पुरुषो वेदस्यार्थं यथावस्थितमवगच्छतिस्मेति कुतो निश्चय प्रमाणेन सम्वादादितिचेत् तदतीन्द्रियेष्वर्थेषु न प्रमाणस्यावतारो यथाग्निहोत्र हवनस्य स्वर्गसाधनत्वे अथवा तीन्द्रिया अर्था वेदिव्याख्यायन्ते तत्कथं तत्र सम्वाद अथ येष्वर्थेष्वस्मादृशां प्रमाणसम्भवस्तद्विषये प्रमाणसम्वाददर्शनादतीन्द्रियाणामप्यर्थानां स सम्यक् परिज्ञा ताभ्युपगम्यते तदयुक्तं रागादिकलुषिततया तस्यातीन्द्रियार्थपरिज्ञानासम्भवादन्यथा सर्वेषामप्यतीन्द्रियार्थं प्रदर्शित्व प्रसक्तिस्ततस्तत्कृताऽतीन्द्रियार्थव्याख्या

मिथिष अपिचागमोऽर्थत: परिज्ञात: सन् प्रेक्षावतामुपयोगविषयो भवति नापरिज्ञातार्थशब्दोगपत्मात्रं ततोऽर्थ: प्रधान सचेतुरुपप्रणीत: किं शब्दमात्रस्या पौरुषेयत्वपरिकल्पनेन निरर्थकत्वात् तत्रान्यतोपि वेदार्थस्य सम्यगवगम: नापिवेद: स्वकीयमर्थमुपदेशमन्तरेण स्वयमेव साक्षादुपदर्शयति ततो वेदस्येष्टार्थ प्रतिपत्त्युपायाभावादग्निहोत्रं जुहुयात् स्वर्गकामइति श्रुतौ यथावेदप्रामाणिकैरयमर्थ: परिकल्पते घृताद्याहुति प्रक्षिपेत् स्वर्गकाम इति तथा यमप्यर्थ सो: किं न कल्पते श्वादेत्स्वमासं स्वर्गकामइतिनियामकाभावादुक्तंच स्वयं रागादिमान्नार्थं वेत्तिवेदस्य नान्यत: नवेदयति वेदोपि वेदार्थस्य कुतो गति? त तोग्निहोत्रं ज जुहुयात्स्वर्ग कामइति श्रुतौखादेत्स्वमासमित्येषनार्थ इत्यत्रकाप्रमारुप्यएवशब्दो व्यवहारोलोकेप्रसिद्ध: सएववेदवाक्यार्थनिश्चय निबंधनन च लोकेग्निहोत्र शब्दस्य स्वमांसवाच्यं नापिजुहुयादित्यस्य भक्षणं तत्कथमयमर्थ: परिकल्पते तदयुक्तं नानार्थाहि लोकशब्दारूढायथागोशब्द: अपि च सर्वेशब्दा: प्राय: सर्वार्थानावाचका: देशादिभेदतोद्रुत विलंबितादिभेदे न तथाप्रतीतिदर्शनात्तथाहि द्रविडस्यार्यदेश मुपगतस्य मारिशब्दात् झटितिवर्ष विषयाप्रतीतिरुपजायते विलम्बिताद्योपसर्ग विपयायहार्य देशोत्पन्नस्य द्रविडदेशमुपगतस्य शीघ्रमुपसर्ग विषयाप्रतीतिर्विलंबिताद्यवर्षं विषयाएवमनयादिशा सर्वेदिशा सर्वेषामपि शब्दाना सर्वार्थवाचकत्वं परिभावनीयं नचयाच्येवंसति घटशब्दमात्र श्रवणा दखिलार्थप्रतीति प्रसंगोयथाक्षयोपशममवबोधप्रवृत्त: क्षयोपशमश्चसंकेताद्यपेक्ष इति तदभावेनभवति ततोऽग्निहोत्रादि शब्दस्य स्वमांसादिवाचकत्वे प्यविरोधइति लौकिकशब्दस्य व्यवहारान्नु सरणोपिनवेदिक वाक्यानामभिलषितनियतार्थप्रतिपत्ति: किंचलौकिक प्रसिद्धेनैवशब्देन व्यवहारेणयद्यं वेदवाक्याना प्रतिनियतमर्थं निश्चेतुमुद्यता: लौकिकस्यशब्द व्यवहा रानैकधा परिप्लवमानोदृष्ट: संकेतवशत: प्राय: सर्वेषामपिशब्दाना सर्वार्थप्रतिपादनशक्ति संभवात् ततोलौकिके नैवशब्देन व्यवहारेणाखाकमाशंकोदयादि कोत्रार्थ: स्यात्किंघृताद्याहुतिंप्रक्षिपेत् स्वर्गकामइति उताहोस्वमासंखादेदिति तत्कथततएवनिश्चय: कर्त्तुं बुध्यते नहियोयत्रसंशयहेतु: स तत्रनिश्चयमुत्पाद

यित् शक्त इति अपिचनैकान्ते न वेदे लौकिकशब्द व्यवहारानुसरणे स्वर्गोर्वश्यादि शब्दानामरूढार्थानामपि तत्र व्याख्यानात् यथास्वर्गं सुखविशेष उर्वशा
चराचारिति तथाशब्दान्तरेष्वप्यरूढार्थं कल्पनाकिन्नसम्भविनी उक्त च स्वर्गोर्वश्यादिशब्दस्य हृष्टोरूढार्थवाचक शब्दान्तरेषु तादृक्तादृश्येवास्तु कल्पनास्वाद
तदग्निहोत्रादेर्वाक्यस्य स्वमांसभक्षण प्रसङ्गोनयुक्तो वेदेनैवान्यत्रतस्यान्यथा व्याख्यानात्तदयुक्त तत्रापिव्याख्यार्थस्य निर्णयाभावात् यथोक्त प्राकृनङ्गिष्मप्रवि
ष्ठार्थस्य वाक्यस्वयमसिद्धार्थमेव वाक्यान्तरनियतार्थं प्रसाधनायत्तत्त्वदोषत्वात् अपेक्ष्यमाणचशावायतार्थमक्त चित्प्रमाणबाधासोऽर्थो ग्राह्योनचाग्निहो
त्रादिवाक्यस्य घृताहुतिप्रक्षेपरूपोऽर्थे प्रमाणबाधासम्भवामसत्कथतमयं न स्वीक्रीम तदेतत्स्वमांस भक्षणलक्षणोप्यर्थे समानन्हि तत्रापिकाचित्प्रमाण
बाधामीक्षामहे अपिच यदि प्रमाणबलात् प्रवृत्तिमीक्ष्येतर्हि पौरुषेयमेव वचस्वयोपादेयसस्यकलोक प्रतीत्यनुसारितयास्र प्रदायतोऽधिगतार्थतया च
मायायुक्तिविषयत्वान्नपौरुषेय विपरीततया तत्प्रकार सम्भवात् तथाहि कातयुक्तिर्यथाङ्गमांस भक्षणात् स्वर्गप्राप्तिर्भविष्यते न घृताद्याहुति प्रक्षेपादिति
घृताद्याहुति प्रक्षेपादीनास्वर्गं प्रापणादिशक्तेरतीन्द्रियत्वेन प्रत्यक्षाद्यगोचरत्वात्स प्रदायस्यचार्थं नियत्यकारिणोऽसम्भवा देतद्यानन्तरमेव वक्ष्याम अयाग
मार्थोपयायुक्ति स्वमांसभक्षणात स्वर्गप्राप्ते बाधिकाभविष्यति तदयुक्तमागमाथ स्वाद्याप्यनिश्चयादनिश्चतार्थस्य अवाचकत्वायोगात् अथ सम्प्रदायादर्थ निश्चयो
भविष्यति तथाहि प्रथमतावेद न जैमनयेस्वार्थं उपदर्शित पश्चात्तेनाप्यन्यसुपदिष्ट इति तदप्यसत् वेदस्यहि यदिस्वार्थोपदर्शन शक्तिस्तातोऽन्यस्यमभिस्वार्थं
किनोपदर्शयति तस्माज्जैमनयेपिनते नस्वार्थोपदर्शित किन्तुस्वर्यसुखेनात्मानमेवार्थं नियमस्वदारसुपदर्शितवान् यथा कश्चित्केनचित् दृष्टवोमार्गं पाटलिपुत्र
स्वस प्राह एषस्वाध्युर्यमानोयक्ति अय मार्गं पाटलिपुत्रस्य तत्र न स्वापार्थचनशक्ति केवलस्वाप्युसुखेन सएवात्मान मार्गोपदष्टार कथयति एववेद
स्यापि न स्वार्थोपदर्शनशक्ति स्वतस्तान् सुखेनजैमनि रात्मानमेवार्थं नियमस्वदार सुपदर्शितवान् तत्र लौकिकशब्द व्यवहारानुसरणाच्चापि युक्ते नापि

चसंप्रदायाद्वेदस्यार्थ निश्चयो नापि तस्यापौरुषेयत्वसाधकं किमपि प्रमाणमित्यसंभवपौरुषेयं उक्तंच वांध्येयखरविषाण तुल्यमपौरुषेयमिति ननु यदि वाध्येय खरविषाणतुल्यमपौरुषेयं भवेत्तर्हि न वेदाववोधपौरुषेयतया शिष्टाः प्रतिपन्नाःसुरथच सर्वेष्वपि देशेषु शिष्टाः प्रतिगृह्णन्तो दृश्यन्तेतस्मात्सभव्य पौरुषेय तदत्र प्रच्छामः केशिष्टाः ननु किमत्र प्रष्टव्यं ये ब्राह्मणीयोनि सम्भविनो वेदोक्त विधिसंस्कृतावेद प्रणीताचार परिपालनैकनियणचेतसस्ते शिष्टा तदेतदयुक्तं विचाराक्षमत्वात् तथाहि किमिदंनाम ब्राह्मणत्वं यद्योनिसंभवाच्छिष्टत्वं भवेत् ब्रह्मणोऽपत्यं ब्राह्मणइति व्यपदिशन्ति पूर्वेपय: न एवं सति चाण्डालस्यापि ब्राह्मणत्वप्रसक्तेः तस्यापि ब्रह्मतनोरुत्पन्नत्वात् उक्तं च ब्रह्मणोपत्यतामात्राद्ब्राह्मण्यतिप्रसज्जते न कश्चिदब्रह्मतनोरुत्पन्नः कश्चिदिष्यते यद प्युक्तं वेदोक्तविधिसंस्कृतावेदप्रणीताचारपरिपालनैक निपणचेतसइति तदप्ययुक्तमितरेतराश्रयदोष प्रसङ्गात्तथाहि वेदस्य प्रामाण्ये सिद्धे सति तदुक्तविधि संस्कृतास्तदर्थसमाचरणाच्छिष्टा भवेयुः शिष्टत्वे च तेषां सिद्धे सति तत्परिग्रहोवेदप्रमाणत्रमित्येकाभावे अन्यतरस्याप्यभावः आह च शिष्टैः परिगृहीतत्वे त्वदन्योन्यसमाश्रयः वेदार्थाचरणात्शिष्टास्तदाचाराच्च तत्प्रमा । स्यादेतद्भवतोपी तत्त्वतो पौरुषेयं वचनमिष्टमेव तथाहिसर्वोपि सर्वज्ञो वचनपूर्वकएवेष्यते तस्य खिर्योपरिष्टया इतिवचन प्रामाण्यात् ततोनादित्वाच्चिरं वचनस्या पौरुषेयत्वमिति तदयुक्तमनादितायामप्य पौरुषेयत्वायोगात् तथाहि सर्वज्ञ परंपरो च्येपाऽनादिरिष्यते ततः पूर्वैः पूर्वैः सर्वज्ञः प्राक्तन सर्वज्ञप्रणीत वचनपूर्वकोभावान्नविरुध्यते किंचवचनंद्विधा शब्दरूपमर्थरूपंच तत्र शब्दरूपवचनापेक्षया नायमस्माकंसंगरोयदुत सर्वोपिसर्वज्ञोवचनपूर्वकइति मरुदेव्यादीनां तदंतरेणापि सर्वज्ञत्वश्रुतेः किंत्वर्थरूपापेक्षयाततःकथंशब्दापौरुषेयत्वाभ्युपगमः नत्वर्थ परिज्ञानमपि शब्दमंतरेणनोपपद्यते तत्कथं नशब्दरूपापेक्षयापि संगरस्तदसच्छब्दमंतरेणापि शिष्टक्षयोपशमादि भावताऽर्थ परिज्ञानस्य संभवात्तथाहि दृश्यते तथाविधक्षयोपशम भावतो मार्गानुसारि बुधैर्वचनमंतरेणापि तदर्थप्रतिपत्तिरिति कृतप्रसंगेन प्रकृतंप्रस्तुमः तत्र सर्वज्ञतप्रभवाक्षपभाद्योप्या

सोऽन्वचते समतिक्रांत प्रस्तुतार्हति तद्व्यवच्छेदार्थं विशेषणांतरमाह तीर्थंकराणाम पश्चिमोजयति तत्र जन्म जरा मरण सलिल संभृत मिथ्यादर्शना विरतिगंभीर महाभीम कषायपाताल दुरवगाह महामोहावर्त्तभीषण रागद्वेष पवन विक्षोभितविविधानिष्टेष्ट संयोगवियोग वाचानिचय संकुल उच्चै स्तर मनोरथ सहस्रवेला कलित संसारसागर तरतियेनतत्तीर्थं तच्चसकल जीवाजीवादिपदार्थसार्थप्ररूपक मत्य तानवद्य मेधातीर्थांतरीयविख्यात चरणकरण क्रियाधार सकल त्रैलोक्यांतर्गत विशुद्धधर्म संपत् समन्वित महापुरुषाश्रयम विसंवादि प्रवचन तत्करणशीलास्तीर्थंकरा तेषां तीर्थंकराणामस्मिन् भारते वर्षेऽधिकृतायामवसर्प्पिण्यानविद्यते पश्चिमोऽस्मादित्यपश्चिम सर्वांतिम पश्चिमइतिनोक्तमधिक्षेपरूप त्वात्मश्चिमशब्दस्य ननु सर्वोपि प्रेक्षावान् फलार्थी प्रवर्त्तते अन्यथाप्रेक्षा वत्ताक्षितिप्रसंगात्ततोऽसौ तीर्थं कुर्वन्नवश्य फलमपेक्षते फलंचापेक्षमाणो अवश्याहमहमिव व्यक्तमवीतराग तदयुक्त यतस्तीर्थकरनाम कर्मोदयसमन्वितो सन्तिह सर्वेपि भगवतो वीतरागास्तीर्थं प्रवर्त्तनाय प्रवर्त्तते तीर्थंकरनाम कर्मच तीर्थप्रवर्त्तनफल ततो भगवान् तीर्थंकरोऽपि वीतरागो पि तीर्थंकरनाम कर्मोदय तस्तीर्थं प्रवर्त्तनस्वभाव सवितेव प्रकाश्यमुपकार्योपकारानपेक्ष तीर्थं प्रवर्त्तयतीतिन कश्चिद्दोष उक्तं च तीर्थप्रवर्त्तनफल यत्प्रोक्त कर्म्म तीर्थंकरनाम तस्योदयात् कृतार्थोप्यर्हं तीर्थंप्रवर्त्तयति तत् स्वभावादेव प्रकाशयति भास्करो यथालोक तीर्थंप्रवर्त्तनाय प्रवर्त्तते तीर्थंकरएव ननु तीर्थंप्रवर्त्तननाम प्रवचनार्थं प्रतिपादन प्रवचनार्थंचेत् भगवान् प्रतिपादयति तर्हि नियमाद सर्व्वंज्ञ सर्व्वस्यापि वक्तु रसर्वज्ञतयोपलम्भात् तथाचाम प्रयोगऽविवक्षित पुरुष सर्वज्ञो न भवति वक्तृत्वाद्रथ्या पुरुषवदिति तदसत् सन्दिग्धव्यतिरेकतया हेतोरनैकांति कत्वात् तथाहि न वचन सर्वज्ञत्वेन सह विरुध्यते द्वतीन्द्रियेण सह विरोधा निश्चयात् द्विविधो हि विरोध परस्परपरिहारलक्षण सहानवस्थानलक्षणश्च तत्र परस्पर परिहारलक्षण तादात्म्य प्रतिषेधे यथा घटपटयो नं खलु घट पटात्मको भवति नापि पटोघटात्मक नसत्तासदंतरमुपैतीति वचनात् ततो नयो परस्परपरिहारलक्षणो

विरोध: एवं सर्वेषामपि वस्तूना भावनीयमन्यथा वस्तु साङ्कर्यप्रसक्तेः यस्तु सहानवस्थान लक्षणो विरोधः सः परस्परं बाध्यबाधकभावसिद्धो सिध्यति नान्य
था यथा वह्निशीतयोः तथाहि विवक्षिते प्रदेशे मन्दं मंदमभिज्वलितवति वह्नौ शीतस्यापि मंदं मंदं भावं यदा पुनरत्यर्थमभिज्वालाविमुचति वह्निस्तदा
सर्वथा शीतस्याभावः इति भवत्यनयोर्विरोधः उक्तञ्च अविकलकारणमेकं तदपरभावे यदा भवन्न भवेत् भवति विरोधः सतयोः शीतहुताशात्मनोर्दृष्टः १
नचैवं वचनसंवेदनयोः परस्परं बाध्यबाधकभावो नहि सम्वेदने तारतम्येनोत्कर्षमासादयति वचस्वितायास्तारतम्येनापकर्ष उपलभ्यते तत्कथमनयो सहा
नवस्थानलक्षणो विरोधः अथ सर्ववेदीवक्ता नोपलब्ध इति विरोध उद्भाव्यते तदयुक्तमत्यन्तपरोक्षो हि भगवान् ततः कथमनुपलम्भमात्रेण तस्याभावनिश्चयो
ऽदृश्यविषयस्यानुपलम्भस्याभावनिश्चायकत्वायोगात् आह च प्रज्ञाकरगुप्तः बाध्यबाधकभावः कः स्याता यत् युक्ति सम्विदो तादृशानुपलब्धिश्चेदुच्यता सैव
साधनं १ अनिश्चयकरं प्रोक्तमीदृशानुपलंभनं नात्यंत परोक्षेषु सदसत्ताविनिश्चयौ अथ वचनं विवक्षाधीनं विवक्षाच वक्तुकामता साच रागो रागादिमतश्च
सर्वज्ञ त्वाभावा वीतरागस्य सर्वज्ञत्वाभ्युपगमात् ततः कथमिव वक्तृत्वान्नासर्वज्ञत्वानुमानमिति तदसत् वक्तुकामस्यारागत्वायोगादभिष्वङ्गलक्षणो हि
रागो नच भगवतः क्वाप्यभिष्वङ्गः किमर्थं तर्हि देशनेतिचेत् ननूक्ततीर्थकरनामकर्मोदयात्धर्मदलक्षो हि भगवान् ततो यत्कर्म यथावेद्यं तत्तथैवाभिष्वंगा
द्यभावेपि वेदयते तथाचाद्यापि दृश्यन्ते परमौचित्यवेदिनः क्वचित्प्रयोजनेऽवश्यकर्त्तव्यतामवेत्याभिष्वंगाद्य भावेपि प्रवर्त्तमानाः तीर्थकरनामकर्मच देशना
विधानेन वेद्यं तं च कहंवेइज्जइ अगिलाए धम्मदेसणाईहिं इति वचनात्ततो न कश्चिद्दोषः स्यादेतन्माभूत् रागादिकार्यतया वचनादसर्वज्ञतासिद्धिः रागा
दिसहचरितयानुभविष्यति तथाहि रागादिसहचरितं सदेव वचनमुपलभ्यते ततो वचनाद्रागादिप्रतीतावसर्वज्ञत्वसिद्धिः तदयुक्तं सहदर्शनमात्रस्यागमक
त्वादन्यथा क्वचिद्वक्तरिगौरत्वेन सहवचनमुपलब्धमिति गौरत्वाभावे ऽप्यवक्तरिन स्यात् यथच ततोप्युलभ्यते तत्र सहदर्शनमात्रं गमकं ततो विपक्षेव्यावृ

त्तिसंदेहात्मकत्वादिति संदिग्धानैकांतिको हेतु अथवा विरुद्धोपि विपक्षेण सह प्रतिबन्धनिश्चयात् तथाहि यत्र संवेदनादेयोपजायते अन्वयव्यतिरेका
भ्यां तथा निश्चयात् कथमन्वयव्यतिरेकौ प्रतीताविति चेत् उच्यते इह यथा२ संवेदनमुत्कर्षमासादयति तथा२ यथास्थिता अप्युत्कर्षेणोपलभ्यते संवेदनो-
त्कर्षाभावेच अस्थिताया अपकर्षोत्कर्षाणां स्थूलभावितत्वोपलम्भात् ततो यथादृष्टतारतम्येन गिरिनदीपूरस्य तारतम्यदर्शनात सर्वोत्कृष्टपूरदर्शने सर्वो
त्कृष्टानुमान तथेहापि भगवत सर्वोत्कृष्टवक्तृत्वदर्शनात् सर्वोत्कृष्टसंवेदनमनुमीयते अपरत्वाच्च यत्र वितर्कविचारपुरस्सरतयोपलम्भात् वितर्कविचारौ च
विकल्पात्मकौ विकल्पश्चास्पष्टप्रतिभासस्ततो भगवतोपि देशनां कुर्वतोऽस्पष्टप्रतिभासवैकल्पिक ज्ञान प्रसक्त तच्च भ्रान्तमिति कथमभ्रान्त सर्वयदीतदसद्यतो
वितर्कविचारायत्तरेणापि केवलज्ञानेन यथावस्थित वस्तूपलभ्य भगवान्वचन परावबोधायमह् [illegible] यथाशब्दव्यवहारनिष्णात प्रत्यक्षत स्तम्भमुपलभ्यस्त भमप्द
न च तस्य तदा स्तम्भशब्द प्रयुञ्जानस्य वितर्कविचारौ नापि तस्यास्पष्टप्रतिभासता तथा ततुभयादेव भगवतापि द्रष्टव्य उक्त चान्यैरपि नचास्पष्टभासि
त्वादेव शब्द प्रवर्त्तते प्रत्यक्षदृष्टे स्तम्भादावपि शब्दप्रवर्त्तनात् अथ स्तम्भ इति ज्ञानमन्यथा स्तम्भवर्त्तन नचास्पष्टावभासित्वमत ज्ञानस्य लक्ष्यते तथाऽन्य
त्रापि शब्दाना प्रवृत्तिर्न विरुध्यते तद्व यतो भगवान् सर्वश्रुतानां प्रभव सर्वतीर्थेशता चापश्चिमतीर्थकरत्वात सकलसत्वाना गुरुतया चाह जयति गुरु
र्लोकानामिति लोकाना सत्वाना गृणाति प्रवचनार्थमिति गुरु प्रवचनार्थ प्रतिपादक तया पूज्य इत्यर्थ तथा जयति महात्मा महावीर महान् अचिन्त्य
शक्त्युपेत आत्मा स्वभावो यस्य स महात्मा शूरवीरविक्रान्तौ वीरयतिस्मेति वीरो विक्रान्त महान् कषायोपसर्गापरीषहेन्द्रियादिशत्रुगणजयादतिशायी
विक्रान्तो महावीर अथवा ईरगति प्रेरणयो विशेषेण ईरयति गमयति कर्म प्रापयति वा शिवमिति वीर अथवा ईरि गतौ विशेषेण अपुन
र्भावेन इर्त्ति स्म यातिस्मशिवमितिवीर महांश्चासौ वीरश्चमहावीर जयतीति भूयश्चाद्योऽस्याभिधानच स्तवाधिकारादद्दुष्ट पुनरप्यस्यैव भगवतो महावीरस्य

तिशय द्वारेण स्तुतिमभिधित्सु राह भद्रमित्यादि भद्रकल्याणं भवतु कस्य सर्वजगदुद्योतकस्य सर्वं समस्तं जगत् लोकालोकात्मकं उद्योतयति प्रकाशयति केवल ज्ञानदर्शनाभ्यामिति सर्वं जगदुद्योतकस्तस्य भद्रापुष्यक्षेम सुखार्थहितार्थैर्हितैराशिषीति विकल्पेन चतुर्थी विधानात् षष्ठ्यपि भवति यथा आयुष्यं देवदत्ताय आयुष्यं देवदत्तस्य अनेन ज्ञानातिशयमाह ननु विशेषेणंतदुपादीयते यत्संभवति संभवेव्यभिचारे च विशेषणमिति वचनात् न च सर्वजगदुद्योतकत्वं संभवति प्रमाणेनाग्रहणात् तथाहि सर्वजगदुद्योतकत्वं भगवतः किं प्रत्यक्षेण प्रतीयते उतानुमानेन आहोस्विदागमेन उताहोउपमानत अथवार्थापत्त्या

सूत्र

ज्जोयगस्स भद्दं जिणस्स वीरस्स भद्दं सुरासुरनमंसियस्सभद्दं धूयरयस्स ३ गुणभवणगहण सुयरयण भरियदंसणवि

भाषा

टावी०सुरवीरपुरुषसदाचारीछताछे२भ० भद्रतेकल्याणहोज्योश्रीअनंत ज्ञानीनोस०तेजिणभगवंतेसर्वजगतमे सर्वलोकालोकनो स्वरूपज्ञानप्रकाशकरीउ० प्रकाश्योउद्योतकीधोभ० भद्रकल्याणहोज्योतेजि० जिणजीतीछे आठकर्मनी १४ प्रकृतिघातीअघातीकसर्वतेम० मोटीबो० श्रीमहावीरतीर्थंकरजीताछे भ०भद्रकल्याणहोज्योजेहनेसुइ संयमतपसीलआचारने आदरिवेकरीनेसु० वैमानिकजोतिषीअसु० भवनपतिवाणव्यंतरतेच्यार जातिनादेवता पूजनी कछवाछे एहवावीरपुरुषने नम० सर्वनमस्कारकरेछे जेहनेभ० भद्रकल्याणहो जेहनोधू० भाटकीछे क०आठकर्मरूपणीर० रजदूरकीधीछे जिणकरी जी वरूपीउवस्त्रनिर्मलोकीधोछे तिणे३ एहपूर्वे महावीरस्वामीनो वर्णवक्यो हिवे जेहनो स्याद्वो संघरूपे तेभणी अर्थांतरसंघवर्णवेछे गु० उत्तारगुण पविग्रहादिकभ० भवनते घरछे तेघररूप नगरमध्ये ग०तेहना समुहघणा कह्या तीर्थंकरे सु०वारे अंगरूपर० रत्नछेतिणेकरीने संघरूपनगरघणो भ०भर्यो दं०समकितरूपवि० असारमिथ्यात्वरूपकाचरे करीने रहितनिर्मलो अथ हिवे द्वितीयार्थ कहेछे भ०भर्योछे संघरूपनगर जेसमकितरूपते भेदरूपवि०

तत्र न तावत्प्रत्यक्षेण भगवतश्चिरातीतत्वात् अपिच परविज्ञानं सदैव प्रत्यक्षा विषयोतीन्द्रियत्वात्तत्सदा विपिन प्रत्यक्षेणग्रहणं नाप्यनुमानेन तद्धि लिंग
लिंगिसंबंध ग्रहणपुरस्सर मेव प्रवर्त्तते लिंगलिंगिसंबंध ग्रहणंच किं प्रत्यक्षेण उतानुमानेन तत्र न प्रत्यक्षेण सर्व वेदनस्यात्यंतपरोक्षतया प्रत्यक्षेण तद्धि
ग्रहणीति तेन तल्लिंगस्याविना भाव निश्चया योगात् नचानिश्चिताविनाभावलिंग लिंगिनोसंबंधमतिप्रसंगात् यत कुतश्चिदस्यतस्यवा प्रतिपत्तिप्रसक्तेः नाप्य
नुमाने लिंगलिंगि संबंध ग्रहणम नवस्थाप्रसंगात् तथाहि तदप्यनुमान लिंगलिंगि संबंध ग्रहणतोभवेत् ततस्तत्रापि लिंगलिंगि संबंध ग्रहणमनुमानांतरा
त्तत्र व्यत्ततापि चेयमेव वार्त्तेत्यनवस्थानाप्यागमत सर्ववेदनविनिश्चय सहिपौरुषेयोवास्यादपौरुषेयोवापौरुषेयोपि सर्वज्ञ कृतोरथ्यापुरुष कृतोवातत्र न ताव
त्सर्वज्ञकृत सर्वज्ञासिद्धे सर्वज्ञकृतत्वस्यैवाविनिश्चयात् अपिचैव मभ्युपगमेसतो तरेतराश्रय दोषप्रसंग तथाहि सर्वज्ञ सिद्धौतत्कृतागमसिद्धि तत् कृतागम
सिद्धौच सर्वज्ञसिद्धि अथरथ्यापुरुष प्रणीतइतीति पक्षस्तर्हिन समप्रमाणमुन्मत्तक प्रणीतवाक्यवत् अप्रमाणाच्च तस्मान्न सर्वचित सर्वज्ञसिद्धिरप्रमाणात्
प्रमेयासिद्धेरन्यथा प्रमाणपर्येषणा विशीर्येत अथापौरुषेयइति पक्षस्तर्हि ऋषभ सर्वज्ञोवर्द्धमानस्वामी सर्वज्ञइत्यादिरथापाद प्राप्नोति ऋषभाद्य भावपि
भावात् तथाहि सर्वकल्पस्थायी आगम ऋषभादयस्त्वधुनातन कल्पवर्त्तिनस्तत ऋषभाद्य भावेपि पूर्वमप्यस्यागमस्यैव मेव भावात्कथमे तथा ऋषभादीनामभि
धान तत्त्वपरमार्थं सत्यवादर्थवादएष नसर्वज्ञ प्रतिपादनमिति अपिच यद्यपौरुषेयागमाभ्युपगमस्तर्हि किमिदानी सर्वज्ञेन आगमादेवधर्माधर्मादि व्यवस्था
सिद्धे तथाह्यागमगम्य सर्ववेदीमाप्युपमानगम्य तस्य प्रत्यक्ष पूर्वकत्वात् तथाहि प्रत्यक्षसिद्ध गोपिंडस्य यथागौ स्तथागवयइत्यागमाहित संस्कारस्याट
व्यां पर्यटतोगवय दर्शनानंतर तन्नाम प्रतिपत्तिरुपमान प्रमाणं यच्च तेन चैकोपि सर्वज्ञ प्रत्यक्षसिद्धो येन तत्सादृश्यावष्टंभेनान्यस्य विवक्षितपुरुषस्योप
मानप्रमाणात सर्वज्ञ इति प्रतीतिर्भवेत् नाप्यर्थापत्तिगम्य साहि प्रत्यक्षादिप्रमाणगोचरीकृतार्थान्यथानुपपत्त्या प्रवर्त्तते नच काप्यर्थ सर्वज्ञमन्तरेणोपप

द्यते तत्कथमर्थापत्तिगम्यस्तदेवं प्रमाणपंचकाहत्तेरभावप्रमाणमेव सर्वज्ञं क्रोडीकरोति उक्तं च प्रमाणपञ्चकं यत्र वस्तुरूपेन न्जायते वस्त्वसत्तावबोधार्थं तत्राभावप्रमाणता१ अपिच सर्ववस्तु जानाति भगवान् केन प्रमाणेन किं प्रत्यक्षेण उत यथासम्भवं सर्वैरेवप्रमाणैः तत्र न तावत्प्रत्यक्षेण देशकालविप्रकृष्टेषु सूक्ष्मेष्वमूर्त्तेषु च तस्याप्रवृत्तेरिन्द्रियाणामगोचरत्वात् यदि पुनस्तत्रापीन्द्रियं व्याप्रियेत तर्हि सर्वः सर्वज्ञो भवेत् अथेन्द्रियप्रत्यक्षादन्यदतीन्द्रियं प्रत्यक्षन्तस्यास्ति तेन सर्वंजानातीति मन्येथाः तदप्ययुक्तं तस्यास्तित्वे प्रमाणाभावात्नच प्रमाणमन्तरेणप्रमेयसिद्धिः सर्वस्य सर्वेष्टार्थसिद्धिप्रसक्तेः अथवा स्तु तदपि सर्वमेतावदेव जगति वस्त्विति न निश्चयो न खल्वतीन्द्रियमप्यवधिज्ञानं सर्ववस्तुविषयं सिद्धं तदपरिच्छिन्नानामपि धर्माधर्मास्तिकायादीना सम्भवादेवं केवलज्ञानापरिच्छिन्नमपिकिमपिवस्तु भविष्यतीत्याशङ्कानमिटस्मरेन सर्वविषयेकेवलज्ञानंवक्तुंशक्यं तथाचकुतःसर्वज्ञस्यापि स्वयमात्मनःसर्वज्ञविनि श्चयः अथ यथायथं सर्वैरेव प्रमाणैः सर्वं वस्तुजानातीति पक्षः नन्वेवं सति य एवागमे कृतपरिश्रमः सएव सर्वज्ञत्वं प्राप्नोत्यागमस्य प्रायः सर्वार्थविषयत्वात् तथाच कः प्रतिविशेषो वर्द्धमानस्वाम्यादौ येन सएव प्रमाणमिष्यते तज्जैमिनिरिति अन्यच्च यथावस्थितसकलवस्तुवेदी सर्वज्ञइष्यते ततोऽशुच्यारसाना मपि यथावस्थिततया सम्वेदनादशुच्यादिरसास्वादप्रसङ्गः आह्च अशुच्यादिरसास्वाद प्रसङ्गश्चानिवारितः किञ्च कालतो नाद्यनन्तः संसारो जगति च सर्वं दाविद्यमानान्यपि वस्तून्यनन्तानि ततः संसारवस्तूनि च क्रमेण विदन् कथमनंतेनापि काले न सर्ववेदी भविष्यति उक्तं च क्रमेण वेदनं कथमिति अत्र प्रतिविधीयते तत्र यत्तावदुक्तं सर्वजगदुद्योतकत्वं भगवतः केनप्रकारेण प्रतीयते इत्यादि तत्रागमप्रमाणादिति ब्रूमः सचागमः किञ्चिन्नित्यः प्रवाहतोनादि त्वात्तथा हि यामेव द्वादशाङ्गीकल्पलताकल्पां भगवान् ऋषभस्वामी पूर्वभवेधीतवान् अधीत्य च पूर्वभवे इह भवे च यथावत्पर्युपास्यफलभूतकेवलज्ञानमवा प्तवान् तामेवोत्पन्न केवलज्ञानः सन् शिष्येभ्य उपदिशति एवं सर्वतीर्थकरेष्वपिद्रष्टव्यं ततो सा वागमोर्थरूपापेक्षया नित्यः तथाच वक्ष्यति एसा दुवालसंगी

नकया विमासीनकयाविनश्यिनकयायिमभविस्यद्दे धुवानीया साछया षकछया षष्यथा षष्याबाधा षपडियामिश्चा इति षधि षागमे यथा संसारी संसार पर्यटति यथा कर्मणामभिसमागमो यथाच तप संयमादिना कर्मणामपगमे केवलाभिव्यक्ति स्तयासर्वं प्रतिपाद्यते इतिचिह्न षागमास्यसर्वज्ञ यदप्युक्त सपौरुषेयोवा पौरुषेयो वा इति तत्राऽर्थतो पौरुषेय सच न सर्वज्ञप्रकाशितत्वादेव प्रमाण किंतु कथंचित् स्ततोपि निश्चिता विपरीतप्रत्ययोत्पादकत्वात्ततो न सरेतराश्रयदोषप्रसङ्ग सर्वज्ञप्रणीतत्वागमस्य भावेपि निश्चिता विपरीतप्रत्ययोत्पादकतया तस्यप्रमाण्यनिश्चयात्मत सर्वज्ञसिद्धि षर्थमागमास्सर्वज्ञ सामान्यत सिद्ध्यति न विशेषनिर्देशेन यथाय सर्वज्ञ इति [तत कथ सर्वज्ञकालेपि सर्वज्ञायमिति व्यवहार उच्यते दृष्टचिन्तितसकलपदार्थप्रकाशनात् तथा हि यत् यत भगवान् पृच्छते यच्च यश्चस्य चेतसि प्रष्टाचिन्तयति तत् तत्सर्वं प्रत्ययपूर्वमुपदिशति ततो सौ ज्ञायते यथा सर्वज्ञ इति तेन यदुक्त भट्टेनसर्वज्ञा सावितिह्येतत् तत्कालपि बुभुत्सुभि तत् ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथमिति तदपास्त द्रष्टव्य दृष्टचिन्तित सकलपदार्थप्रकाशनेन तस्य सर्वज्ञत्व निश्चयात् नन्वेव व्यवहारता निश्चयो न निश्चयतो [निश्चयतो हि तदा सर्वज्ञ यदि विदितो भवति यदाततस्येय सर्वं विदित्वा सन्न च तथाऽऽ घ्याते न चे तत्कस्तु गम्य षर्थेकत्व सवाद दर्शनादन्यत्रापि स सवादी द्रष्टव्य एव तर्हि मायावी बहुजल्पाक सर्वोपि सर्वज्ञ माप्नोति सत्याप्येकदेशसंवाद दर्शनादाह च एक देशपरिज्ञान कस्य नामनविद्यते नह्येक नास्ति सत्यार्थ पुरुषे बहुजल्पिनि तदयुक्त व्यवहारतोपि निश्चयस्य सम्यग् निश्चयत्वात् वैयाकरणादि निश्चय तत् तथाहि वैयाकरण कतिपय दृष्ट शब्दव्याकरणादय सम्यग् वैयाकरण इति निश्चियते एव दृष्टचिन्तिताद्य प्रकाशना सर्वज्ञोपि न चैवं मायाविनोपि सर्वज्ञत्व प्रसङ्ग मायाविनिसर्वेषु दृष्टेष्वार्थेषूचितिषु सवादायोगात् निपुणेनच प्रतिपत्ता भवितव्य षथ वैयाकरणो न्येन वैयाकरणान सकल व्याकरण शास्त्रार्थ सवादानिश्चयतोपि ज्ञात गम्यते ननु सर्वज्ञोप्यन्येन सर्वज्ञेन यथावत् ज्ञात गम्यते एवेति समान षथ

तदानीमन्येन सर्वज्ञेन निश्चयतो विज्ञायतामिदानींतु स कथं ज्ञायते उच्यते इदानींतु सम्प्रदायादव्याहत प्रवचनार्थ प्रकाशनाच्च यदप्यवादीत् ऋषभः
सर्वज्ञो वर्द्धमानस्वामि सर्वज्ञ इत्यादिरर्थवादः प्राप्नोतीत्यादि तदप्यसारमागमस्यायं कल्पोयोय: सर्वज्ञ उत्पद्यते तेन तत्तत्कालवर्त्तिना तीर्थकृता सर्वेषा
मप्यवश्यं चरितानि वक्तव्यानि ततोन ऋषभाद्यभिधानमर्थवादः यदप्यभिहितं माप्युपमान प्रमाणगम्य इत्यादि तदप्ययुक्तमेकं सर्वज्ञं यदा व्यवहारतो
यथावद्विनिश्चित्यान्यमपि सर्वज्ञं व्यवहारतः परिज्ञाय एषोपि सर्वज्ञइति व्यवहरति तदा कथंनोपमान प्रमाणविषयः अर्थापत्तिगम्योपि भगवान् अन्यथा
गमार्थस्य परिज्ञानासम्भवात् न खल्वतींद्रियार्थ दर्शनमन्तरेणागमस्यार्थोतीन्द्रियः पुरुषमात्रेण यथावदवगन्तुंशक्यते तत आगमार्थ परिज्ञानान्यथानुपप
त्त्यासर्वज्ञोऽवश्यमभ्युपगन्तव्यः एतेन यदुक्तं प्राक्किमिदानी सर्वज्ञेनागमा देव धर्म्माधर्म व्यवस्था सिद्धेरिति तत्प्रतिक्षिप्तमवसेयं सर्वज्ञमन्तरेणागमार्थ
स्यैव सम्यक् परिज्ञानासम्भवात् यच्चोक्तं सर्ववस्तु जानाति भगवान् केन प्रमाणेनेत्यादि तत प्रत्यक्षेणेति पक्षस्यादपि च प्रत्यक्षमतीन्द्रियमवसेयं ननु तत्रा
प्युक्तं तस्यास्तित्वे प्रमाणाभावादिति उक्तमिदमयुक्तं तत्त तदस्तित्वेऽनुमान प्रमाण सद्भावात् तच्चानुमान मिदं यत्तारतम्यवत्तत्सर्वातिम प्रकर्षभाक् यथा
परिमाण तारतम्यवच्चेदं ज्ञानमिति नचायम सिद्धोहेतु तथाहि दृश्यते प्रतिप्राणी प्रज्ञामेधादि गुणपाटव तारतम्यं ज्ञानस्य ततो वश्यमस्य सर्वान्तिम
प्रकर्षेण भवितव्यं यथा परिमाणस्याकाशे सर्वान्तिम प्रकर्षस्य ज्ञानस्य सकल वस्तुस्तोम प्रकाशकत्वं अथ यद्विषयस्तरतमभावः सर्वान्तिम प्रकर्षोपि तद्विषयएव
युक्तस्तरतम भावस्येन्द्रियाश्रितस्य ज्ञानस्योपलभ्यतः सर्वान्तिम प्रकर्षोपि तस्यैवेति कथमतीन्द्रिय ज्ञानसम्भवः इन्द्रियाश्रितस्यसच ज्ञानस्य प्रकर्ष भावे
पि न सर्वविषयतातस्य सूक्ष्मादाव प्रवृत्तेः अथोच्यते मनोज्ञानमप्यतीन्द्रिय ज्ञानमुच्यते तस्य च तरतमभावः शास्त्रादौदृष्ट एव तथाहि तदेव शास्त्रं कश्चि
त्स्फटित्वेव पतति अथ धारयन्ति अपरस्तुमंदं वोधतोपि कश्चित् मुकुलितार्थावबोधम परोयथेष्टावबोधमेव मन्यास्वपि कलासुयथा योगं मनोविज्ञानस्य

उच्यते अत्यन्ताभ्यासप्रकर्षवशतो मनो निरपेक्षमपि शक्तत्वात् तथाहि तरणं शिक्षिकाम: प्रथमं तरंडमपेक्षते ततोऽभ्यासप्रकर्षयोगतस्तरणनिष्णातस्तरंडम परित्यजति एवं योग्यपि वेदितव्य: तत: सर्वोत्कृष्टप्रकर्षसंभवेऽतीव स्फुट प्रतिभासं सकललोकालोकविषयमनुपममबाध्यं केवलज्ञानमुदयते ततो यदुक्तं शास्त्राद्यभासत: शास्त्रप्रभृत्येवावगच्छत इत्यादि तदत्यन्तमध्यात्मशास्त्रयाथात्म्यवेदि गुरुसंपर्कवहिर्भूतत्वसूचकमेव सेयं स्यादेतत्तारतम्यदर्शनादस्तु ज्ञानस्य प्रकर्षसंभवानुमानं सतुप्रकर्ष: सकल वस्तु विषय इति कथंश्रद्धेयं न खलु लंघनमभ्यास तस्तारतम्यवदप्युपलभ्यमानं सकल लोक विषयमुपलभ्यते तदसत् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् तथाहि न लंघनमभ्यासादुपजायते किन्तु बलविशेषत: तथाहि समानेपि गवलक्षशाखामृगशावके योरभ्यासेन समानं लङ्घनं उक्तं च गवलक्षशाखामृगयोर्लङ्घनाभ्याससत्त्वे समानेपि समानत्वं लङ्घनस्य न विद्यते अपिच पुरुषयोरपि द्वयो: समानप्रथमयौवनयोरपि समानेप्यभ्यासे एक प्रभूतं लङ्घयितुं शक्नोति अपरस्तु स्तोकं तस्मादवसेयं लङ्घनं नाभ्यासमात्र हेतुकमभ्यासस्तु केवलं देहे वैगुण्यमात्रमपनयति तच्च बलं वीर्यान्तराय कर्मक्षयोपशमात् क्षयोपशमश्च जातिभेदापेक्षी द्रव्यक्षेत्राद्यपेक्षी च ततो यस्य यावद्बलं तस्य तावदेवलङ्घनमिति, तत्र सकललोकविषयं जीवस्तु शशाङ्क इव स्वरूपेण सकलजगत्प्रकाशनस्वभाव: केवलमावरणघनपटल तिरस्कृतप्रभावत्वात् न तथा प्रकाशेन उक्तं च स्थित: शीतांशुवज्जीव: प्रकृत्याभावशुद्धया चन्द्रि काबच्च विज्ञानं तदावरणमभ्रवत् । ततो यथा प्रचण्डनैर्ऋतपवन प्रहताघनपटलपरमाणव: शनै: शनैर्निःशेषा भूयापगच्छन्ति तदपगमनानुसारेण च चन्द्रस्य प्रकाशो जगति वितनुते तथा जीवस्यापि रागादिभ्यश्चित्तं विनिवर्त्य कायवाक्चेष्टासु संयतस्य सम्यक् शास्त्रानुसारेण यथावस्थितं वस्तुपरिभाव यतो ज्ञानादिभावनाप्रभावतो ज्ञानावरणीयादिकर्मपरमाणव: शनैःशनैर्निःशेषा भूयात्मन: प्रच्यवन्ते: कथमेतत्प्रत्येयमिति चेत् उच्यते इहाज्ञानादिनि मित्तकं ज्ञानावरणीयादिकर्म तत्सत्प्रतिपक्षज्ञानाद्यासेवनेऽवश्यं तदात्मन: प्रच्यवते उक्तं चवंधइ जहेय कम्मं पमाणाईहिं कलुसियमणोउ तच्चेय तव्विव

बहुतो सद्भावो मुग्धदृशेण। ज्ञानावरणीयकर्मपरमाणु प्रध्वंसनानुसारेण चात्मन शनै शनैर्ज्ञानमधिकमधिकतरमुल्लसति यदा तु ध्यानादिभावना प्रकर्ष
वशेनाशेषज्ञानावरणीयादि कर्मपरमाण्वपगमस्तदा सकलाभ्रपटलविनिर्मुक्तस्येवार्क इवात्मा लब्धयथावस्थितात्मस्वरूप सकलस्यापि जगतोऽवभासक ततो
ज्ञानस्य प्रकर्ष सकललोकविषय अथवा सर्वं वस्तुसामान्येन शास्त्रेपि प्रतिपाद्यते यथा पञ्चास्तिकायात्मको लोक आकाशास्तिकायात्मकश्च अलोक कि
ञ्चिद्विशेषतश्च तुल्याधस्तिर्यग्लोकाकाशाना सविस्तर तदभिधानात शास्त्रानुसारेण चाभ्यासतस्तारतम्यभावोपि ज्ञानस्य सकलवस्तुविषयपर्यंत प्रक
र्षभावस्तद्विषयो न विरुध्यते ननु तु सामान्यतोपि न सकललोकविषयमिति कथमभ्यासतस्तत्प्रकर्ष सकललोकविषयो भवेत स्यादेतद्यद्यपि सा मायत
शास्त्रानुसारेण सकलवस्तुविषय ज्ञानमुपजायते तथाप्यभ्यासतस्तत्प्रकर्ष सकलवस्तुगताशेष विशेषविषय इति कथ ज्ञायते नह्यत्र किञ्चित्प्रमाण
मस्ति नच प्रमाणाभावे वचो विपश्चित प्रतिपद्यन्ते विपश्चिता चितिप्रसङ्गात् तदसत् अनुमानप्रमाणसद्भावात तथाऽनुमानमिद जलधिजलपलप्रमाणादयो वि
शेषा कस्यचित्प्रत्यक्षा ज्ञेयत्वात् घटादिगतरूपादिविशेषवत् ज्ञेयत्वं हि ज्ञानविषयतया व्याप्त नच जलधिजलपलप्रमाणादिरूपेषु विशेषेषु प्रत्यक्षमन्त
रेण शेषानुमानादि ज्ञानसम्भवस्तथा हि नतेविशेषा अनुमानप्रमाणगम्यालिङ्गाभावात नाप्यागमगम्यास्तस्य विधिप्रतिषेधमात्र विषयत्वात् नाप्युपमा
गम्यास्तस्य प्रत्यक्षपुरस्सरत्वात् अन्यच्च नेषागमेन यत्सोपि विध्यादिप्रतिपादक अप्रत्यक्षत्वतो नैषोपमानस्यापि सम्भव नाप्यर्थापत्तिविषया सा हि दृष्ट
श्रुतोवाऽर्थोयदन्तरेणानोपपद्यते यथाकाष्ठस्य भस्मचिकाऽग्निदाहकशक्तिमन्तरेण तद्विषयावबध्यते नचदृष्ट श्रुतोवाकोप्यर्थस्तान् विशेषमन्तरेणनोपपद्यते
ततोनार्थापत्तिगम्या नचेतेविशेषा स्वरूपेणनसन्ति विशेषात विना सामान्यस्यैवासम्भवात् न च वाच्यमत एव सामान्यस्यान्यथानुपपत्तेरर्थापत्तिगम्या
नियतिस्वरूपतयानवगमात् प्रातिनैयत्यमेवच विशेषाणा स्वरूपमन्यथा विशेषहानै सामान्यरूपताप्रसङ्गात न च तेषा ज्ञेयत्वमेवासिद्धमिति वाच्यप्रमाव

प्रमाणव्यभिचार प्रसङ्गात्तथाहि यदि केनापि प्रमाणेन न ज्ञायन्ते तर्हि प्रमाणपञ्चकं यत्र वस्तुरूपेन ज्ञायते तत्र सत्ताव वोधार्थं तत्राभावप्रमाणेति वच
प्रमाणव्यभिचार प्रसङ्गात्तथाहि यदि केनापि प्रमाणेन न ज्ञायन्ते ... अथच ते विशेषाः स्वरूपेनैवावतिष्ठन्ते ततोभावप्रमाणाव्यभिचार प्रसङ्गस्तस्मादिपञ्चे
नादभावप्रमाणविषयाः सुरभावाख्यं च प्रमाणमभावसाधनमिष्यते अथच ते विशेषाः स्वरूपेनैवावतिष्ठन्ते ततोभावप्रमाणाव्यभिचार प्रसङ्गस्तस्मादिपञ्चे
व्याव्कानुप, लभ्धाविशेषाणा ज्ञेयत्वं प्रत्यक्षविषया तथाव्याप्यतद्भूतिप्रतिवन्धसिद्धिः स्यादेतत् ज्ञेयत्वादिति हेतुर्विशेषविरुद्धस्तथाहि घटादि गतारूपादि
विशेषादिन्द्रिय प्रत्यक्षेण प्रत्यक्षानुपलब्धास्ततस्तत् ज्ञेयत्वमिन्द्रिय प्रत्यक्षविषयतया प्रत्यक्षत्वेन व्याप्तं निश्चितंसत् जलधिजलपलप्रमाणादिष्वपि विशेषेषु प्रत्यक्ष
त्वमिन्द्रिय प्रत्यक्षविषय तया साधयति तच्चानिष्टमिति तदयुक्तं विरुद्धलक्षणासम्भवात्तथाहि विरुद्धो हेतुस्तदा भवति यदावाधकं नोपजायते विरुद्धोऽसति
वाधकोद्भूति वचनादत्र च बाधकं विद्यते यदिहि इन्द्रिय प्रत्यक्षविषयतया प्रत्यक्षत्वं भवेत् ततोऽस्मादृशामपि ते प्रत्यक्षाभवेयुर्नच भवंति तस्मादस्मादृशैः
प्रत्यक्षत्वेनासंवेदन मेव तेषामिन्द्रिय प्रत्यक्षविषयत्वसाधने बाधकमिति न विशेषविरुद्धः अन्यःप्राह न विशेषविरुद्धता हेतोर्दूषणमन्यथासकलानुमानोच्छेद
प्रसङ्गात् तथाहि यथा धूमोग्निं साधयत्यग्नि प्रतिवद्धतया मद्दान स निश्चितत्वात्तथास्मिन् साध्यधर्म्मिण्यग्न्यभावमपि साधयति तेनापिसह महानस प्रति
वन्धनिश्चयात् तद्यथा नयं चेनाग्निना अग्निमान् पर्वतोधूमवत्त्वान्महानसवत् तत्रैवं न कश्चिदपि हेतुः स्यात्तस्मान्न विशेष विरुद्धता हेतोर्दोषः आह च
प्रज्ञाकर गुप्तोपि यदि विशेषविरुद्धतया क्षितिर्गुन हैतुरिहास्ति न दूषितः निखिलहेतु पराक्रम रोधिनीन हिनसा सकलेन विरुद्धतायमुक्तमथवास्तु
यदि तथापि सर्वसेतावदेयजगति वर्त्तिति न निश्चयइत्यादि तदप्यसारं यतोऽवधिज्ञानं तदावरण कर्मदेशक्षयोत्थं ततोतीन्द्रियमपि तन्न सकल वस्तुविषयं
केवलज्ञानन्तुनिर्मूल सकल ज्ञानावरण कर्मपरमाणुपगम समुत्थं तत कथमिवतन्न सकल वस्तुविषय भवेत् नह्यतीन्द्रियस्य देशादि विप्रकर्षाः प्रतिव
न्धकाः न च केवल प्रादुर्भावे आवरणदेशस्यापि सम्भवस्ततो यद्वस्तुः तत्सर्वं भगवतः प्रत्यक्षमेवेति भवति सर्वज्ञस्यैवमात्मनो निश्चयः एतावदेवजगतिवर्त्तितिय

दप्युक्तमशुच्यादि रसास्वाद प्रसङ्ग इति तदपि दुरन्त दीर्घपापोदयविजृम्भितमज्ञानतोभगवत्यधिक्षेप करणात् योहि यादृग्भूतोऽशुच्यादिरसो येषाममाधिनां
यादृङ् तामीतिमुत्पादयति येषाञ्च विद्वेषन्त्वकार्यं तदयस्यतया भगवान्वेत्ति तत कथमशुच्यादि रसास्वादप्रसङ्ग अथ यदि तटस्थतयावेत्ति तर्हि न सम्यक्
सम्यक्तेन यथा स्वरूपवेत्ता तर्हि नियमत्वात्तदास्वादप्रसक्तिरुक्तस्य तटस्थत्वेन वेद्यत्वेतत्त्वेनावेदनभवेत् तदाम्नानात् वेद्यत्वेऽशुच्यास्वाद प्रसक्तेतद सत्भवानुच्चि
सकर्माकरणाधीन ज्ञानस्ततोरस यथावस्थितम स्य जिह्वेन्द्रियव्यापार पुरस्सरमास्वादएव जनाति भगवांस्तुकरणव्यापार निरपेक्षोऽतीन्द्रियज्ञानी ततो
जिह्वेन्द्रियव्यापारस्याम्य द्यास्वाद मन्तरेणेव रस यथावस्थित तटस्थतयासम्यग वेत्तीतिन कश्चिद्दोष एतेन पररागादिवेदने रागीत्यादि प्रसङ्गा पादनम
पास्तमवसेय पररागादीनामपि यथावस्थिततया तटस्थेन स तावेदनात यदप्युक्त कालतो नाद्यन त ससारइत्यादि तदप्यसम्यग्युगपत्सम्यवेदनात न च
युगपत्सर्वंवेदनसभविद्दृष्टत्वात तथाहि सम्यग्जिनागमाभ्यासप्रवृत्तस्य भङ्ग्या विचारितधर्माधर्मास्ति कायादिस्वरूपस्य सामान्यत पञ्चास्तिकायविज्ञान
युगपदपि जायमानमुपलभ्यते एवमशेषविशेषकलितपञ्चास्तिक यविज्ञानमपि भविष्यति तथाचायमर्थोन्यैरपि उक्तो यथासकलशास्त्रार्थं स्वभ्यस्त प्रतिभास
ते मनस्येकक्षणेनैव तथानन्तादिवेदन यदप्युच्यते कथमतो न भाविवावेत्ति विनष्टानुत्पन्नत्वेन तयोरभावादितितदपि न सम्यक यतो यद्यपीदानींतनकाला
पेक्षया ते असती तथापि तथातीतेकाले अवर्त्तिष्ट यथावभाविवर्त्तिष्यते तथा ते साक्षात्करोति ततो न कश्चित दोष स्यादेतद्यथा भवद्भिर्ज्ञानस्य तारतम्य
दर्शनात्मकपसम्भवोऽनुमीयते तथातीर्थान्तरीयैरपि ततो यथा भवत्सम्मततीर्थंकरोपदर्शिता पदार्थराशय सत्यतामश्नुवते तथातीर्थान्तरीयसम्मततीर्थकरोप
दर्शिता अपि सत्यतामश्नुवीरन् विशेषाभावादन्यथा भवत्सम्मततीर्थंकरोपदर्शिता अपि असत्यतामश्नुवीरन् अथ तीर्थान्तरीयसम्मततीर्थंकरोपदिष्टा पदार्थरा
शयोऽनुमानप्रमाणेन बाध्यते ततो न तेषत्या तदयुक्तमनुमान प्रमाणेनातीन्द्रियज्ञानस्य बाधितुमशक्यत्वात आहच अतीन्द्रियान् संवेद्यान् पश्यतापेक्ष

तिरस्कारापादनमभयं नापि मोक्षनिबन्धनमहङ्कार,समुत्पमात्मीयविनीत पुत्रभ्रात्प्रभृति बन्धुवर्गसम्बासम्भवश्च तत्र कथमिव समोक्षोजन्मिनामुपादेयो भव
ति श्राहच वीतरागस्य न सुख योषिदालिङ्गनादिज वीतद्वेषस्य च कुत शत्रुघेनाविमर्दज वीतमोहस्य न सुखमात्मीयाभिनिवेशजतत कि ताह्यातनक्षय
मोक्षेणजन्मिना श्रपि चक्षुरादयोपि तत्र सर्वथानिरुद्धाइच ते ततोऽत्यन्तबुभुक्षाक्षामकुक्षेर्यद्विशिष्टाहारभोजनं,यद्वाग्रीष्मादौ पिपासापीडितस्य पाटला
कुसुमादिवासित सुगन्धिशीतलसलिलपाने नोपजायते सुख तदपि तत्र दूरतोपास्तप्रसरमिति न कार्य तेन तदसतीना समीचीन यतोयद्यपि रागादय
प्रथमत क्षणमात्रसुखदायि तयारमणीया प्रतिभासते तथापि तेपरिणामपरंपरयाऽनन्तदु सहनरकादिदु खसम्पातहेतवस्तात पयतदारब्धतया विपाकभो
जनसमुत्थमिवन रागादिप्रभव सुखमुपादेय प्रेक्षावतां भवति प्रेक्षावन्तोहि यद्दु खमपयाय यदेव बहुसुख तदेवप्रतिपद्यते यस्तुजात्सुखनिमित्त बहु
दु खमाद्रियते सप्रेक्षावानेवन भवति किन्तुकण्ठि रागादिप्रभवमपि च सुखमुक्तनीत्यापन्दु खहेतुकमपवर्गसुख यैकान्तिकात्यन्तिकपरमानन्दरूपतासद्
भूत यवदिनामुपादेय नरागादिप्रभवमिति यदिपुनरयदपि तदपि सुखमभिलपणीय भवतर्हि पामरीपडाना अम्लादपानप्रभव यञ्च गर्त्तान्मूकराणां पुरीष
भक्षणसमुत्थयञ्च रक्षसां मानुषमांसाभ्यवहारसम्भव यच्चदासस्य सत स्वामिप्रसादादिहेतुक यदपि च पारलौकदेशयासिनो मात्रादिशरीरसङ्गमनिबन्धन
तन्सर्वं भवतोहिद्जातिभावेमति न सम्पद्यते इतिपामरीडाद्यप्यभिलपणीय अपिच नरकदु खममासनतद्वियोगसम्भव सुखमुपजायते ततोनरकदु खमप्य
भिलपणीय अथविशिष्टमेव सुखमभिलपणीय नयत्किञ्चित्तर्हिविशिष्टमेकान्तेन न सुख मोक्षएवविद्यतेरागादौपचारादौ वा तस्मात्तदेवाभिलपणीयनशेषमि
ति योपि च सम्यग्दर्शनज्ञानचारित्ररूपो मोक्षमार्गउक्त सोपि युक्त्याविचार्यमाण प्रेक्षावतामुपादेयतामञ्चते तथाहि सकलमपि कर्म्मजालमिथ्यात्वाद्यावि
धिविशादिहेतुक तत सकलकर्म्म निराकरणाय सम्यग्दर्शनाद्यभ्यासएव घटते नान्यत्तदेव भगवदुपदिष्टेषु प्रत्यक्षपरिच्छेद्यार्थेषु प्रत्यक्षत्वमेयेषु यथाक्रम

प्रत्यक्षानुमानसंवाददर्शनान्मोक्षादिषु च युक्त्योपपद्यमानत्वाद्भगवानेव सर्वज्ञोनसुगतादिरितिस्थितं तथाभद्रंजिनस्य वीरस्य महावीरस्य भवतिरागादि
शत्रु गणमिति जिनश्चौणादिकोनक् प्रत्ययस्तस्यभद्रं भवतु अनेनापायातिशयमाह अपायोविश्लेषस्तस्यातिशय: प्रकर्षभावापायातिशयो रागादिभि: सहा
त्यंतिकोवियोगइत्यर्थ: ननु रागादिभि: सहात्यंति कोवियोगो संभवीप्रमाणबाधनात्तथ प्रमाणमिदं यदनादिमन्नतद्विनाशमाविशतियथाकाशं अनादिम
न्तस्य रागादयइति किं विरागादयो धर्मास्ते च धर्मिणोभिन्ना अभिन्नावा यदिभिन्नास्तर्हि सर्वेषामविशेषेण वीतरागत्वप्रसंग: रागादिभ्यो भिन्नत्वाद्विव
क्षित पुरुषवत् अथ भिन्नास्तर्हि तत्क्षयेधर्मिणोप्यात्मन: क्षय: तदभिन्नत्वात् तत्स्वरूपवत्तथाच कुतस्तस्यवीतरागत्वं तस्यैवा भावादिति अतोच्यते इह
यद्यपि रागादयो दोषाजंतोरनादि मन्तस्तथापि कस्यचित् स्त्रीशरीरादिषु यथावस्थितवस्तु तत्वावगमेन तेषा रागादिनां प्रतिपक्षभावमत: प्रतिक्षणमप
चयोदृश्यते तत: सम्भाव्यते विशिष्टकालादि सामग्रीसद्भावे भावनाप्रकर्षविशेष भावतो निर्मूलमपिक्षय: अथ यद्यपि प्रतिपक्षभावनात: प्रतिक्षणमपचयो
दृष्टस्तथापि तेषामात्यंतिकोक्षय: सभवतीतिकथमवसेयंउच्यते अन्नततथाविधप्रतिबन्धग्रहणात् तथाहिशीतस्पर्शं सम्पाद्यारोमहर्षादय:शीतप्रतिपक्षस्य वन्हे
र्मंदतायामंदाउपलब्धा उत्कर्षे च निरन्वय विनाशधर्माणस्ततोन्यत्रापि वाधकस्यमन्दतायाबाध्यस्यमन्दता दर्शनाद्बाधकोत्कर्षेऽवश्यं बाध्यस्यनिरन्वय विनाशोवे
दितव्योन्यथा बाधक मन्दतायामं दतापिनस्यात् यथास्तिज्ञानस्य ज्ञानावरणीयं कर्मबाधकं ज्ञानावरणीय कर्ममन्दताया च ज्ञानस्यापि मनाक् मन्दता
अथच प्रबलज्ञानावरणीय कर्मोदयोत्कर्षेपि न ज्ञानस्य निरन्वयोविनाश: एवं प्रतिपक्षभावनोत्कर्षेपि न रागादिनामत्यंतो च्छेदो भविष्यतीति तद
युक्तं द्विविधंहि बाध्यंसहभू स्वभावभूतं सहकारि सम्पाद्य स्वभावभूतञ्च तत्र यत्सहभूस्वभावभूतंतितन्न कदाचिदपि निरन्वयं विनाशमाविशतिज्ञानं चात्मन:
सहभूस्वभावभूतमात्मा च परिणामनित्यस्ततोत्यंत प्रकर्षवत्यपि ज्ञानावरणीय कर्मोदयेन निरन्वयविनाशो ज्ञानस्य रागादयस्तु लोभादिकर्म विपाकोद

वसपादितसत्तानासात कर्म्मणो निर्म्मलमपगमेतेपि निर्म्मलमपगच्छति नत्यासता कर्म्मस्थादरागादय तथापि कर्म्मनिवृत्तौ ते निवर्त्तते इति नाय
थ नियमो न हि दहननिवृत्तौ तत्कृताकाष्ठेऽङ्गारता निवर्त्तते तदसत् यतद्दकिञ्चित् क्वचिन्निवर्त्त्यविकारमोपादयति यथाग्नि सुवर्णे द्रवता तथाग्नि
निवृत्तौ तत्कृतां सुवर्णे द्रवतानिवर्त्तते किञ्चित्पुन क्वचिदनिवर्त्त्य विकारारम्भक यथा सएवाग्नि काष्ठेन श्यामता मातमपि काष्ठेदहनकृत तन्निवृत्तौ
निवर्त्तते कर्म्म च अनिवर्त्त्यविकारारम्भक यत्पुनरनिवर्त्त्यविकारारम्भक भवत्तर्हि यदपितदपि कर्मणाकृतनकर्मनिवृत्तौनिवर्त्तेत यथाग्निनाश्यामता मातमपि
काष्ठकृतमग्निनिवृत्तौ ततश्यदेकदाकर्मणापादित मनुष्यमरत्व कृमिकीटत्वमथत्व शिरोवेदनादि तत्सर्वकाल तथैवाव तिष्ठेत नचैतदृश्यते तस्मान्निवर्त्त
काष्ठ कृतमग्निनिवृत्तौ ततश्यदेकदाकर्मणापादित मनुष्यमरत्व... 

विकारारम्भक कर्म्म तत कर्म्मनिवृत्तौ रागादीनामपि निवृत्ति म्बलाङ्गवाच्यत्वानैते रागादयो लोभादिकर्म्म विपाकोदयनिबन्धना किन्तु कफादि
प्रकृतिहेतुका तथाहि कफहेतुकोराग पित्तहेतुकोद्वेषो वातहेतुकश्चमोह कफादयश्च सदैवसन्निहिता शरीरस्य तदात्मकत्वात्ततो न वीतरागत्वसम्भव
तदयुक्त रागादीना कफादिहेतुकत्वायोगात्तथा हि यद्धेतुकायोय न व्यभिचरति यथा धूमोऽग्निमन्यथा प्रतिनियत कार्य्यकारणभाव व्यवस्थानुपपत्ते न च
राग।दय कफादीन्व्यभिचरन्ति व्यभिचार दर्शनात्तथाहि वातप्रकृतेरपि दृश्येते रागद्वेषौ कफप्रकृतेरपि द्वेषमोहोपित्त प्रकृतेरपि मोहरागौतत कथ
रागादय कफादिहेतुका अथमन्यथा एकैकापि प्रकृति सर्वेषाणा पृथक् पृथग्जनिका तेनायमदोषइति तदयुक्तमेव सतिसर्वेषामपि जन्तूना समरागादि
दोष प्रसक्तेरथश्चहि प्राणिना नैकतदा कयाचित्प्रकृत्याभवितव्य साचा विशेषेण रागादि दोषाणामुत्पादिके ति सर्वेषामपि समानरागादिनामसक्ति
अथास्ति प्रतिप्राणि पृथक् पृथग्यातर कफादीनां परिणतिविशेषस्तेन न सर्वेषा समरागादितामसङ्गा तदपि न साधीयो विकल्पयुगलानतिक्रमात् तथाहि
सोप्यसार कफादीना परिणति विशेष सर्वेषामपि रागादीनामुत्पादक आहोस्विदेकतमस्यैव कस्यचित्तत्रयद्याद्या प्रकृतेर्हि वातपरिणति विशेष

स्तावदेव कालं सर्वेषामपि रागादीनामुत्पादप्रसङ्गः नचैक कालमुत्पद्यमाना रागादयः संवेद्यन्ते क्रमेण तेषां वेदनान्न खलु रागाध्यवसायकालेद्वेषाध्यवसायो मोहाध्यवसायोवासंवेद्यतेऽथ द्वितीय पक्षस्तत्रापियावत् स कफादिपरिणतिविशेषस्तावदेक एव कश्चिद्दोषः प्राप्नोतिऽथच तदवस्थ एव कफादिपरिणतिविशेषे सर्वेपि दोषाः क्रमेण पराहत्य पराहत्योपजायमानानुपलभ्यंते अथादृश्यमान एवकेवल कार्यविशेष दर्शनोन्नीयमानसत्ताकस्तदातत्तद्रागादिदोषहेतुः कफादि परिणति विशेषोजायतेतेन पूर्वोक्त दोषावकाशः ननु यदि स परिणतिविशेषः सर्वथा ननुभूयमानस्वरूपोपिपरिकल्प्यते तर्हिकर्मैवकिंनाभ्युपगम्यते एवं हि लोकः शास्त्रमार्गोप्याराधितो भवति अपिच स कफादि परिणति विशेषः कुतस्तदाऽन्यान्य रूपेणोपजायते इति वक्तव्यं देहादितिचेत् ननु तदवस्थेपि देहे भवद्भिः कार्य विशेष दर्शन तस्तस्य तस्यान्यथाभवनमपीष्यते तत्कथं तद्देहनि नित्तं नहि यदि विशेषेपि यद्विक्रियते सविकारस्तद्धेतुक इति वक्तुं शक्यंनाप्यन्यो हेतुरूपलभ्यते तस्मात्तदप्यन्यथार भवनं कर्म्म हेतुकतयाद्रष्टव्यं तथाचसतिकर्म्मैवैकाभ्युपगम्यता किमन्तर्गऽनातद्धेतुतया कफादि परिणति विशेषाभ्युपगमेन किञ्चाभ्यासजनितप्रसराः प्रायोरागादयस्तथाहि यथायथा रागादयः सेव्यन्ते तथातथाभि वृद्धिरेव तेषामुपजायते न प्रत्यागिस्तेन समानेपि कफादि परि णति विशेष तदवस्थोपि च देहेयस्येह जन्मनि परत्ववायस्मिन् दोषेभ्यासः स तस्य प्राचुर्येण प्रवर्त्तते शेषस्तुमन्दतया ततोऽभ्यास संपाद्यकर्म्मोपचय हेतुका एव रागादयो न कफादिहेतुकाइति प्रतिपत्तव्यं अन्यच्च यदि कफ हेतुकोरागः स्यात्ततः कफवृद्धौरागवृद्धिर्भवेत् पित्तप्रकर्षे तापप्रकर्षवत् न च भवति तदुत्कर्षोत्थपीडाबाधित तयाद्वेषस्यैव दर्शनात् अथ पश्चातरं गद्भीया यदुतन कफहेतुकोरागः किन्तु कफादिदोष साम्यहेतुकस्तथाहि कफादिदोषसाम्ये विरुद्धव्याध्यभावतो रागोद्भवोदृश्यते इति तदपि न समीचीनं व्यभिचार दर्शनात् न हि यावत्कफादिदोषसाम्यं तावत्सर्वदैवरागोद्भवोनुभूयते द्वेषाद्युद्भवस्या प्यनुभवात् न च यद्भावेपि यन्न भवति तत्तद्धेतुकं स चेतसावक्तुं शक्यं अपिचैवमभ्युपगते ये विषमदोषास्तेरागिणो न प्राप्नुवन्ति अथच तेपि रागिणो

दृश्यते स्यादेतदवचश्चूर्यातपत्व निर्वपमिश्रुकोपचयहेतुकोरागोनान्यहेतुकइतितदपि न युक्तमेवस्यात्य तस्त्रीवेषापरतयात्सुकस्यत घरतृप्ततमाना रागिता न स्यादयचैतपि तस्याम प्यवस्थायां नि काम रागिणोदृश्यते किञ्चयदिश्रुकस्य रागहेतुतातर्हि तस्य सर्व स्त्रीपुंसाधारणत्वान्नैक स्त्रीनियतारोग कस्यापि भयेत् दृश्यते च कस्याप्येक स्त्रीनियतोराग अथोच्येत रूपस्यापि कारणत्वाद्रूपातिशय लुब्धस्तस्यामेवरूपवत्यामभिरज्यतेन योषिदन्तरे उक्तञ्च रूपातिशय पाशे न वशीकृतमानसा स्यायोपित परित्यज्यारमतेयोषिदन्तरेतदपिन मनोरमरूपर हितायामपि क्वापिरागदर्शनात् अथ तत्रोपचार विशेष समीचीनो भविष्यति तेन तत्राभिरज्यते उपचारोपिच रागहेतुर्नरूपमेव केवल तेना यमदोषइति तदपि व्यभिचार इयेनापि विमुक्तायां क्वचिद्रागदर्शनात्तस्माद भ्यास जनितोपचय परिपाक कर्म्मैव विचित्रस्वभावतयातदा तदातत्कारणापेक्षतत तत्रागादिहेतुरिति कर्म्म हेतुकारणरागादय एते न यदपिकश्चिदाह पृथिव्यादि भूताना धर्म्म एते रागादयस्तथाहिपृथिव्यम्बुभूयस्त्वे रागस्तेजोवायुभूयस्त्वे द्वेषोजलवायुभूयस्त्वे मोहइतितदपि निराकृतमवसेयव्यभिचारात्तथाहिय स्यामेवावस्थायाराग सम्भवतस्यामेवावस्थायां द्वेषामोहोपिच दृश्यते ततएतदपियत्किञ्चित् तस्मात्कर्म्म हेतुरागादयस्तत् कर्म्म निष्पत्तौनिवर्त्ततेमयोगाधावयेसहकारि सपाद्यायदुपधानादपकर्षिणस्तत्तदत्यत क्षयौनिरन्वय विनाश धर्म्माणो यथारोमहर्षादयो यच्चि क्षयोभावस्तोपधानादपकर्षिणश्च सहकारिकर्म्म सपाद्यारागादयइति अत्र सहकारि सपाद्य इति विशेषण सहभू स्वभाव बोधादि व्यवच्छेदार्थं यदपिच मारुमन्यस्त प्रमाणयदनादि मत्ततद्विनाशमा विय ति यथाकाशमिति तदप्यप्रमाण हेतोरनैकान्तिकत्वात् प्रागभावेनव्यभिचारात् तथाहि प्रागभावोऽनादिमानपि विनाशमाविशत्यन्यथाकार्यानुत्पत्ते भावनाधिकारो च सम्यग्दर्शनादि रत्नत्रयसमन्वितावेदितव्य इतरस्य तदनुरूपानुष्ठान मसत्यभावेन तस्यमिथ्यारूपत्वात् आहचनाणी तवमि निरयो चारित्तीभावणाए जोगोत्ति सापरागादि दोषनिदानस्वरूप विषयफलगोचरा यथागममेव मवसेयाक कुप्पियाणुयोगोमय विशुद्धचक्षोद

सुपकर्त्तुमशक्यत्वात्तत समुत्पन्नयोगज्ञान पूर्वाक्षिप्त कृपाविशेष संस्कारवशात् कृतार्थोपि देशनायामवर्त्तते इति तदेतदयुक्तमप्यात्म प्रत्ययानिर्दोष नैरात्म्या
दिवस्तु तत्वपरिभाव्यभाव तत्साथैभावयतोऽततोभावना प्रकर्षविशेषतो वैराग्यमुपजायते ततोमुक्तिमाम यस्त्वात्मानमभिमन्यते न तस्यमुक्तिसंभवो यत
आत्मनिपरमार्थं तथाविद्यमानेतत्स्नेह प्रवर्त्तते तत स्नेहवशाच्चत सुखेषुपरितर्षवान् भवति तृष्णावशाच्च सुखसाधनेषु दोषान सतोपितिरस्कृत्ते
गुणांश्चाभूतानपि पश्यति ततोगुणदर्शीसन्तृतानिम ममत्वविषयकरोतितस्मात् यावदात्माभिनिवेश तावत्संसार आत्मप्रय पश्यत्यात्मा तताऽस्यात्मकितिया
स्तत स्नेह स्नेहाच्च सुखेषुतृष्यतितृष्णा।दोषा स्तिरस्कुरुते । गुणदर्शीपरितृष्यन्ममेति तत्साधनान्युपादत्ते तेनात्माभिनिवेशोयावत्तावत्संसारे २ तदेव
तत्वैमन्त्रकरणसता मा समस्तामो उभयोयसाविलसितमात्मा भावेभबन्धमोक्षाद्यकाधिकरणत्वायोगात्तथाहि यदि नाम्नाभ्युपगम्यते किन्तु पूर्वापरक्षण
त्रुटितानुसन्धानात्मानक्षणा एव तथा च सत्यन्यस्य बन्धोऽन्यस्य मुक्तिरन्यस्य क्षुदन्यस्य तृप्तिरन्योऽनुभविता अन्यस्मर्त्ता अन्यश्चिकित्साद्दुःखमनुभवति अन्यो व्याधि
रहितो जायते अन्यस्तप परिक्लेशमधिगच्छते अपर स्वर्गसुखमनुभवति अपर शास्त्रमभ्यसितुमारभ्यते अन्यो अधिगतशास्त्रार्थो भवति नचैतद्युक्तमतिप्रस
ङ्गात् सन्तानापेक्षया बन्धमोक्षाद्येकाधिकरण्यमिति चेत्सन्तानस्यापि भवन्मतेनानुपपद्यमानत्वात् सन्तानोहि सन्तानिभ्यो भिन्नोवास्यादभिन्नो वा यदि
भिन्नस्तर्हि पुनरपि विकल्पयुगलमुपढौकते स किल नित्य क्षणिको वा यदि नित्य स्ततो नतस्य बन्धमोक्षादि सम्भव आकाशमेव स्वभावतया तस्यावस्था
वैचित्र्यानुपपत्ते नच नित्य किंमप्यभ्युपगम्यते सर्वं क्षणिकमिति वचनात् अथ क्षणिकस्तर्हि तदेव प्राचीन बन्धमोक्षादिवैयधिकरण्य प्रसक्त अथाऽभिन्न
इति पक्षस्तर्हि सन्तानि न एव न सन्तानस्तदभिन्नत्वात्तत्स्वरूपवत् तथाच सति तदवस्थमेव प्राक्तन दूषणमिति स्यादेतत्न कश्चिदन्य क्षणेभ्य सन्तान
किन्तु यएव कार्यकारणभावप्रबन्धेन क्षणानां भाव सएव सन्तान ततो न कश्चिद्दोष तदप्ययुक्त भवन्मते कार्यकारणभावस्याप्यघटमानत्वात् तथाहि प्रती

त्यसमुत्पादमात्रं कार्यकारणभावस्ततो यथा विवक्षितघटक्षणानन्तरं घटक्षणस्तथा पटादिक्षणा अपि यथाच घटक्षणात् प्रागनन्तरो विवक्षितो घटक्षण स्तथा पटादिक्षणा अपि ततः कथं प्रतिनियतकार्यकारणभावावगमः किञ्च कारणादुपजायमानं कार्यं सतो वा जायेत असतो वायदि सतस्तर्हि कार्योत्पत्ति कालेपि कारणं सदिति कार्यकारणयोः समकालता प्रसङ्गः न च समकालयोः कार्यकारणभाव इष्यते भावपत्याद्यविशेषात् घटपटादीनामपि परस्परं कार्यकारणभावप्रसङ्गः अथासत् इति पक्षस्तदप्ययुक्तमसतः कार्योत्पादायोगादन्यथा खरविषाणादपि तदुत्पत्तिप्रसक्तेः नचात्यंताभावप्रध्वंसाभावयोः कोपि विशेषः उभयत्रापि वस्तुसत्ताभावात् प्रध्वंसाभावे वस्त्वासीत्तेन हेतुरितिचेत् तदासीत्तदा न हेतुरन्यदानाहेतुरिति साध्वीतत्त्वव्यवस्थितिः अन्यच्चतद्भावे भावइत्यवगमे कार्यकारणभावावगमः सच तद्भावे भावः किं प्रत्यक्षेण प्रतीयते उतानुमानेन न तावत्प्रत्यक्षेण पूर्ववस्तुगतेन हि प्रत्यक्षेणपूर्वं वस्तुपरिच्छिन्न मुत्तरवस्तुगते ननूत्तरं न चैते परस्परस्वरूपमेव गच्छतो नाप्यन्योनुसन्धाता कश्चिदेकोभ्युपगम्यते ततएतदनन्तरमेतस्य भाव इति कथमवगमः नाप्यनु मानेन तस्य प्रत्यक्षपूर्वत्वात्तद्धि लिङ्ग लिङ्गि संबंधग्रहणपूर्वकं प्रवर्त्तते लिङ्गलिङ्गिसम्बन्धश्च प्रत्यक्षेण ग्राह्योनानुमानेनानुमानेन ग्रहणानवस्था प्रसक्तेः नच कार्यकारणभावविषये प्रत्यक्षं प्रावर्त्तिष्ट ततः कथं तत्रानुमानप्रवृत्तिः एवं ज्ञानक्षणयोरपि परस्परं कार्यकारणभावावगमः प्रत्यक्षो वेदितव्यः तत्रापि स्वेन स्वेन स्वसम्वेदनेन स्वस्वस्वरूपस्य ग्रहणे परस्परस्वरूपानवधारणादेतदनन्तरमहमुत्पन्नमेतस्य चाहं जनकमित्यनवगते स्वान्तभवनात्तेन कार्य कारणभावो नापि तदवगमस्ततो याचितकमंडनमेतदेकसन्तति पतितत्वादेकाधिकरणं बन्धमोक्षादिकमिति एतेन यदुच्यते उपादेयोपादानक्षणाना पर स्परं वास्यवासकभावादुत्तरोत्तरविशिष्ट२ तरक्षणोत्पत्तेः मुक्ति सम्भव इति तदपि प्रतिक्षिप्तमवसेयं उपादानोपादेयभावस्यैवोक्तनीत्यानुपपद्यमानत्वात् यो पि च वास्यवासकभाव उक्तः सोपि युगपद्भाविनामेवोपलभ्यते यथातिलकुसुमाना उक्तं चान्यैरपि अवस्थिता हि वास्यन्ते भावाभावैरवस्थितैः तत्कथमुत्पादे

योपादानक्षणयोर्वास्य वासकभावपरस्परमसाहित्यात् उक्तञ्च वास्य वासकयोश्चैव समाहित्याच्च वासना पूर्वक्षणैरनुत्पन्नोवास्य तेनोत्तरक्षण उत्तरेण
विनष्टत्वान्न च पूर्वस्य वासनाप्यपिच यासनावासकाङ्क्षावास्यादभिन्ना वा यदिभिन्नातर्हि तया शून्यत्वान्नैवान्य वास्यते वस्त्वन्तरवदथाभिन्नातर्हि नवास्ये
वासनाया सङ्क्रान्तिरेव वासकस्यापि सक्रांति स्यादभिन्नत्वात् तत्स्वरूपवत् सङ्क्रान्तिश्चेत्तर्हि अन्वयप्रसङ्ग इति यत्किञ्चिदेतत् यदप्युक्त सकलमपिजगत्र ग
ह्येपादि इ वसकुलमभिजाना न कथमिदं सकलमपि जगन्माया तु स्वातुहत्तं व्यमित्यादि तदपि पूर्वापरासम्बद्ध मन्यकोभाषितमिव केवलभयं छपक यतो
भवन्मतेन क्षणा एव पूर्वापरक्षणत्रटितानुगमा परमार्थं सन्तः क्षणानां चावस्थानकालमानमेक परमाणुव्यतिक्रममात्रमतएवोत्पत्ति व्यतिरेकेण नान्या
तेषां क्रियासङ्गतिमुपपद्यते भूतिर्येषां क्रियासैवकारकं सैव चोच्यते इति वचनात्ततो ज्ञानक्षणाना मुत्पत्त्यनन्तर नमनागप्यवस्थान नापि पूर्वापरक्षणा
भ्यामनुगम तस्मान्न तेषा परस्परस्वरूपावधारण नाप्युत्पत्त्यनन्तर कोपि व्यापारस्तत कथमयोय मे पुर साक्षात्प्रतिभासते इत्येवमर्थं निश्चयमात्मन
नेकक्षणसम्भवि अनुसन्धानमुपपद्यते तदभावाच्च कुत सकलजगतो रागद्वेषादिदु च सङ्कुलतया परिभावनं कुतोवा दीर्घतरकालानुसन्धानेन शास्त्रार्थचि
न्तन यत्प्रभावत सम्यगुपायमभिज्ञाय यत्नपाविशेषान्मोक्षाय घटन भवेदिति ननु सर्वोयं व्यवहारो ज्ञानक्षणसन्तत्यपेक्षयानेकक्षणमधिकृत्यतत् केयमनुप
पत्तिरुद्भाव्यते उच्यते सुकुमारप्रज्ञो देवानां प्रिय सदैवसप्तघटिकामध्यमिष्टान्नभोजनमनोज्ञशयनीयशयनाभ्यासेन सुखैधितो नवस्तुतायाम्यावगमे चित्त
परिक्लेशमधिसहसे तेनाद्याभिहितमपि न सम्यगवधारयसि ननु ज्ञानक्षणसन्ततावपि तदवस्थैवानुपपत्ति स्यात् हि वैकल्पिका अवे कल्पिकावा
क्षणा परस्परमनुगमाभावादविदितपरस्परस्वरूपा नच क्षणादूर्ध्वमवतिष्ठन्ते तत कथमेष पूर्वापरानुसन्धानरूपो दीर्घकालिक सकलजगद्दु खिताप
रिभावनशास्त्रविमर्शादिरूपो व्यवहार उपपद्यते अक्षिणी निमील्य परिभाव्यतामेतत् यदप्युच्यते स्वप्नेषु निर्विकल्पकमर्थाकारसुत्पन्न मूपदर्शनादि

तवासना प्रबोधात्तं विकल्पं जनयति येन पूर्वापरानुसन्धानात्मकोऽर्थं निश्चयादि व्यवहारः प्रवर्त्तते तदप्येतेनापास्तमवसेयं यतोविकल्पोप्यनेकक्षणा त्मकस्ततो विकल्पेपि यत्पूर्वक्षणे दृत्तं तदपरक्षणो नवेत्ति यच्चापरक्षणे दृत्तं न तत्पूर्वक्षणस्ततः कथमेषदीर्घकालिको ऽनुस्यूतैकरूपतया प्रतीयमानोऽर्थ निश्चयादिव्यवहारो घटते अपिच भवन्मते न ज्ञानस्यार्थपरिच्छेदव्यवस्थापिनोपपद्यते र्थाभावे ज्ञानस्योत्पादादर्थकार्यतया तस्याभ्युपगमान्नाकारणं विषय इति वचनात् नचवाच्यं तत्तदुत्पन्नमिति तस्य परिच्छेदकमिन्द्रियस्याप्यर्थवत्परिच्छेदकत्वप्रसक्तेः ततोप्युत्पादात्तदभावेऽभावात् नापि सारूप्यात् तस्यापि सर्व देशविकल्पाभ्यामयोगात्तथाहि न सर्वात्मनार्थेन सहसारूप्यं सर्वात्मनार्थेन सहसारूप्ये ज्ञानस्य जडरूपताप्रसक्तेः अन्यथा सर्वात्मना सारूप्यायोगात् नाप्येकदेशेन सर्वस्य सर्वार्थपरिच्छेदकत्वप्रसङ्गात् सर्वस्यापि ज्ञानस्य सर्वैरपि वस्तुभिः सहकेनचिदंशेनान्ततः प्रमेयत्वादिनासारूप्यसम्भवात् आहच भवदा चार्योपि कर्मकीर्त्तिर्ज्ञाननयप्रस्थाने सर्वात्मना हिसारूप्ये ज्ञानतां व्रजेत् साम्ये केनचिदंशेन सर्वं सर्वस्य वेदनं १ नच सारूप्यादर्थपरिच्छेदव्यवस्थितार्थ साक्षात्कारो भवति परमार्थतो ह्यर्थस्य परोक्षत्वात्ततो योयं प्रतिप्राणिप्रसिद्धः सकलैरपीन्द्रियैर्यथायोगमर्थ साक्षात्कारोयच्च गुरूपदेशश्रवणं शास्त्रनिरी क्षणंवायद्वशात्तत्त्वं ज्ञात्वा मोक्षाय प्रवृत्तिस्तत्सर्वमेकान्तिकक्षणिकपदाभ्युपगमे विरुध्यते स्यादेतत्परमार्थतएतदेवतथाहि न ज्ञानंकस्यचित् परिच्छेदक मुक्तनीत्याग्राहकत्वायोगात् नापि तत्कस्यचित्परिच्छेद्यं तत्रापि ग्राह्यग्राहकत्वायोगात् ततो ग्राह्यग्राहकाकारातिरिक्तं ज्ञानमेव केवलं स्वसंविदितरूप त्वात् स्वयं प्रकाशते तेनाद्वैतमेव च तत्त्वं यस्तु तथार्थनिश्चयादिकोव्यवहारः सोनादिकालसंलीनवासनापरिपाकसम्पादितो द्रष्टव्याः तदप्ययुक्तं वासनाया अपिविचार्यमाणयात्वघटमानत्वात्तथाहि सावासना असतीसतीवान तावदसतीयसतः खरविषाणस्येव सकलोपाख्याविकलया तथातथार्थप्रतिभासहेतुत्वा योगादवसती तर्हिसाज्ञानाद्व्यतिरिक्तान्न वाव्यतिरिक्तेचेद्व्यतिरेके तदानिर्द्वयस्याभ्युपगमादपि चसाज्ञानाद्व्यतिरिक्तासतीएकरूपास्यादनेकरूपावानतावदेकरूपा

पेक्षत्वात् केवलज्ञानप्रादुर्भावे मत्यादीनामसम्भवात् ननु कथमसम्भवो यावतामतिज्ञानादीनि स्वस्वावरणक्षयोपशमेपि प्रादुःषन्ति ततो निर्मूलस्वस्वावरण विलयेतानि सुतरां भविष्यन्ति चारित्र परिणामवत् उक्तञ्च आवरणदेसविगमे जाइं विज्जंति मइ सुयाइंति आवरणसव्वविगमे कहताइं नहोंति सव्वजीवस्स १ उच्यते इह यथा जात्यस्य मरकतादिमणेर्मलोपदिग्धस्ययावन्नाद्यापि समस्तमलापगमस्तावद्यथा यथा देशतो मलविलयस्तथा तथा देशतोऽभिव्यक्तिरुपजायते साच क्वचित् कदाचित्कथंचिद्भवतीत्यनेक प्रकारो तथात्मनोपि सकलकाल कलापावलं बिनिखिलपदार्थ परिच्छेदकरणैक पारमार्थिक स्वरूपस्याप्यावरणमलपटलतिरोहित स्वरूपस्य यावन्नाद्यापि निखिलकर्ममलापगमस्तावद्यथा देशतः कर्ममलो छेदस्तथा देशतस्तस्य विज्ञप्तिरुज्जृंभते सा च क्वचित्कदाचित्कथंचिदित्यनेकप्रकारा उक्तं चमलविद्दमणेर्व्यक्तिर्यथानेकप्रकारतःकर्मविद्धात्मविज्ञप्तिस्तथानेकप्रकारतः१ सानेकप्रकारतामतिश्रुतादिभेदे नावसेया ततो यथामरकतादिमणेरशेषमलापगमसंभवे समस्तानेकप्रकारतः साचानेकव्यक्तिव्यवच्छेदेनपरिस्फूटरूपैकभिव्यक्तिरुपजायते तद्वदात्मनोपिज्ञानद



ज्जवनाणं केवलनाणंपूतंसमासओदुविहंपन्नत्तंतंजहापच्चक्खंच१ परोक्खंच२सेकिंतंपच्चक्खंपच्चक्खंदुविहंपण्णत्तंतंजहा



ते मनःपर्यवज्ञान के० घातिया कर्मक्षयकरीने जे ग्यान पामे तिणे करी सकललोकना द्रव्य जाणे देखे ते इहां ४ ग्याननो प्रयोजन केवलीने नथी ४ ग्यान नो उपयोगी केवली नथी अप्रतिपाति उपयोगछे केवलीनो४ ज्ञान आव्या जाइ केवलग्यान आव्यो नजाइ ५ तं० तेवली स० संक्षेप थी ज्ञानना दु० वेभेद प० परूप्यो कह्यो तिर्थंकरे त० ते जिम छे तिम कहे छे प० जेहवस्तु प्रत्यक्षजाणीये ते जिम मिश्री मीठी तेजीभ सुं जाणी तिम जाणे एह प्रत्यक्ष १ प० परोक्ष ते अदृष्ट करी जाणे साभल्यावत्२ तेभणीज्ञाननावे भेद प्रत्यक्ष १ परोक्ष२ से० ते हिवे कि० कुण प०प्रत्यक्षज्ञानना हे गोतम प्रत्य

मनचारित प्रभावतो नि शेषावरणप्रक्षयादशेषदेशज्ञानव्यवच्छेदेनैक रूपा अतिपरिस्फुटा सर्ववस्तुपर्याय साक्षात्कारिणी विज्ञप्तिरुद्धसति तथाचोक्त यथा जात्यस्य रत्नस्य नि शेषमलापगत स्फुटैकरूपाभिव्यक्तिर्विज्ञप्तिस्तद्वदात्मन । ततो मत्यादिनिरपेक्ष केवलज्ञान अथवा शुद्ध केवल तदावरणमल कलङ्कस्य नि शेषतोऽभ्युपगमात् सकल वा केवल प्रथमत एवाशेष तदावरणापगमत सम्पूर्णोत्पत्ते असाधारण वा केवल अनन्यसदृशत्वात् अनन्त वा केवल ज्ञेयानन्तत्वात् केवल च तत् ज्ञान च केवलज्ञान ननु सकलमपीद ज्ञान ज्ञप्त्येकस्वभाव ततो ज्ञप्त्येकस्वभावत्वाविशेषे कि कृता एष आभिनिबोधकादि भेदो अथ भेदस्तत इति चेत् तथाहि वार्त्तमानिक वस्त्वाभिनिबोधिकज्ञानस्य ज्ञेय त्रिकालसाधारण सामान्य परिणामो ध्वनि गोचर श्रुतज्ञानस्य रूपिद्रव्याण्यवधिज्ञानस्य मनोद्रव्याणि मन पर्याय ज्ञानस्य समस्तपर्यायान्वित सर्ववस्तु केवलज्ञानस्य तद तदसमीचीनमेव सति केवलज्ञानस्य भेदबाहुल्य प्रसक्ते तथाहि ज्ञेयभेदात् ज्ञानस्य भेद यानि च ज्ञेयानि प्रत्येकमाभिनिबोधकादि ज्ञाना नामिष्यन्ते तानि सर्वाण्यपि केवलज्ञानेपि विद्यन्ते अन्यथा केवलज्ञानेन तेषामग्रहणमसद्भावविषयत्वात्तथा च सति केवलि नोप्यसर्वज्ञत्वप्रस ङ्ग आभिनिबोधिकादि ज्ञानचतुष्टयविषयज्ञानस्य तेनाग्रहणान्न चैतदिष्टमिति अथोच्यते प्रतिपत्तिप्रकारभेदत आभिनिबोधिकादि भेद तथाहि न यादृशी प्रतिपत्तिराभिनिबोधिकज्ञानस्य तादृशी श्रुतज्ञानस्य कि त्वन्या इत्येवमवध्यादिज्ञानानामपि प्रतिपत्तव्य ततो भवत्येव प्रतिपत्तिभेदतो ज्ञानभेद तदप्ययुक्तमेव सत्येकस्मिन्नपि ज्ञानेऽनेकभेदप्रसक्ते तथाहि तदेशकालपुरुष स्वरूपभेदेन विचित्रमानमेकैक ज्ञान प्रतिपत्तिप्रकारात्यन्त प्रति पद्यते तत्र योपि पक्ष श्रेयान् स्यादेतदस्त्यावारक कर्म तच्चानेकप्रकार ततस्तद्भेदात् तदावार्यज्ञानमप्यनेकता प्रतिपद्यते ज्ञानावारक च कर्म पञ्चधा पञ्चा पमादौ तथाभिधानात्ततो ज्ञानमपि पञ्चधा प्ररूप्यते तदेतदतीव युक्तसङ्गत यत आवार्यापेक्षमावारकमत आवार्यभेदेन तद्भेद आवार्य च ज्ञानरूपापे

यथा सकलमप्येकरूपं ततः कथमाकारकस्य पञ्चरूपता येन तद्भेदात् ज्ञानस्यापि पञ्चविधो भेदः स्यादिति अत्र स्वभावत एवाभिनिबोधिकादिको ज्ञानस्य भेदो न च स्वभावः पर्यनुयोगमश्नुते न खलु किमिति दहनो दहति नाकाशमिति कोपि पर्यनुयोगमाचरति अथो मन्यते मतौ यतो भवतः चेतसि ननु यदि स्वभावत एवाभिनिबोधिकादिको ज्ञानस्य भेदस्तर्हि भगवतः सर्वज्ञत्वहानिप्रसङ्गस्तथाहि ज्ञानमात्मनो धर्मस्तस्य चाभिनिबोधिकादिको भेदः स्वभावत एवाभिनिबोधादिको ज्ञानस्य भगवतः भेदः स्वभावत एव व्यवस्थितः क्षीणावरणस्यापि तद्भावप्रसङ्गः सति च तद्भावे मत्यादिज्ञानस्येव भगवतोप्यसर्वज्ञत्वमापद्यते केवलज्ञानभावतः समस्तवस्तुपरिच्छेदात्सर्वज्ञत्वमिति चेत् ननु यदा केवलोपयोगस्तदा सर्वज्ञता देशतः परिच्छेदकमत्यादिज्ञानस्येव तस्यापि बलादसर्वज्ञत्वमापद्यते न च वाच्यं तस्य तदुपयोग एव न भविष्यति आत्मस्वभावत्वेन तस्यापि क्रमेणोपयोगस्य निवारयितुमशक्यत्वात् केवलज्ञानानन्तरं केवलदर्शनोपयोगवत् केवलज्ञानोपयोगकाले सर्वज्ञत्वं शेषज्ञानोपयोगकाले वा सर्वज्ञत्वमापद्यते तच्च विरुद्धमतोऽनिष्टमिति आह च मत्तेगसकावत्ते ण भिण्णवत्थाइ किं कओ भेदो न य विसेसाभावेण सव्वविसयं अओ चरिमं अह पडिवत्तिविसेसा नेगंमि ण गमभेयभावाओ आवरणविभेओ निक्कसभावभेयं विणा न भवे तम्मि य सइ सव्वेसिं खीणावरणम्मि पाउब्भावो तब्भावत्ता उभियजुत्तिविरोहाओ आभिणिबोहाइ भावओ नियमा केवलभावाओ चेव सव्वन्नुणो विरुद्धमिणं तस्मादिदमेव युक्तियुक्तं पश्यामो यदुतावग्रहज्ञानादारभ्य यावदुत्कर्षप्राप्तं परमावधिज्ञानं तावत्सकलमप्येकं तच्च सकलसंज्ञितमशेषवस्तुविषयत्वाभावात् अपरं च केवलिनस्तच्च सकलसंज्ञितमिति द्वावेव भेदौ उक्तं च तम्हा अवग्गहाओ आरब्भ इहेगमेव नाणंति जुत्तं छउमत्थस्सासगलं इयरं च केवलिणो अत्र प्रतिविधीयते तत्र यत्तावदुक्तं सकलमपीदं ज्ञानमेकस्वभावं ततो ज्ञस्येकस्वभावत्वाविशेषात्किं कृत एष आभिनिबोधादिको भेद इति तत्र ज्ञस्येकस्वभावता किं सामान्यतो भवताभ्युपगम्यते विशेषतो वा तत्र न तावदाद्यः पक्षः क्षितिसाधको सिद्धसाध्यतया तस्य बाधकत्वा

सततदपेक्षमावारकमपि तथा भिद्यमानं न युष्माद्दग्दुर्जन वचनीयतामास्कन्दति एवमुक्तेजितो भूय: सावष्टम्भं पर' प्रश्नयति नन परिस्थूरनिमित्तभेदव्यव स्थापिता अप्यमी आभिनिबोधिकादयो भेदाज्ञानस्यात्मभूता उतानात्मभूता: किंचात: उभयथापि दोष: तथाहि यद्यात्मभूतास्तत: क्षीणावरणेपि तद्भाव प्रसङ्गस्तथा चासर्वज्ञत्वप्रागुक्तनीत्या तस्यापद्यते अथानात्मभूतास्तर्हि न ते पारमार्थिकास्तत: कथमावार्यापेक्षो वास्तव आवारकभेद: तदपि न मनोरमं सम्यग् वस्तुतत्वापरिज्ञानात् इह हि सकल घनपटलविनिर्मुक्त शारददिम मणेरिव समन्तत: समस्तवस्तुस्तोमप्रकाशनैकस्वभावो जीवस्तस्य च तथाभूत स्वभाव: केवलज्ञानमिति व्यपदिश्यते स च यद्यपि सर्वघाति नाकेवलज्ञानावरणेनाव्रियते तथापि तस्यानन्ततमो भागोनित्योद्घाटितएव अक्खरस्स अणंतो भागोनिच्च्ग्घाडिओ जइ पुण सोविआवरिज्जा तेण जीवो अजीवत्तणं पाविज्जाइत्यादि वक्ष्यमाणप्रवचन प्रामाण्यात् ततस्तस्य केवलज्ञानावरणावृतस्य घनपटलाच्छादि तस्यैव सूर्यस्य यो मन्द: प्रकाश: सोऽपातरालावस्थित मतिज्ञानाद्यावरणक्षयोपशमभेद सम्पादितं नानात्वं भजते यथा घनपटलावृतसूर्य मंदप्रकाशो अपान्तरालावस्थित कटकुड्याद्यावरणविवरप्रदेशभेदत: सच नानात्वंक्षयोपशमानुरूपं तथातथा प्रतिपद्यमान: स्वस्वक्षयोपशमानुसारेणाभिधान भेदमश्नुते यथामतिज्ञानावरणक्षयोपशमजनित: समंदप्रकाशो मतिज्ञानं श्रुतज्ञानावरणक्षयोपशमजनित: श्रुतज्ञानमित्यादि तत: आत्मस्वभावभूताज्ञान स्याभिनिबोधिकादयो भेदास्ते च प्रवचनोपदर्शितपरिस्थूलनिमित्तभेदत: पंचसंख्यास्तदस्तदपेक्षमावारकमपि पचधोपवर्ण्यमानं न विरुध्यतेन चैवमात्मस्वभाव भूतत्वेक्षीणावरणस्यापि तद्भावप्रसङ्गो यत एते मतिज्ञानावरणादि क्षयोपशमरूपोपाधिसम्पादित सत्ताका यथा सूर्यस्य घनपटलावृतस्य मन्दप्रकाशभेदा: कटकुड्याद्य वरणविवरभेदा पाधिसम्पादितातत: कथंते तथा रूपक्षयोपशमभावे भवितुमर्हन्ति न खलु सकलघनपटलकटकुड्याद्यावरणापगमे सूर्यस्यतेतथा रूपामन्दप्रकाशस्तदा भवन्ति उक्तंच कडविवरागय किरणागेहंतरियस्स जहदियेसस्स जहते कडसेचावगमे होंति जहतहइमाइंपि १ ततो यथा जन्मादि

याभिथ्यावप्रतिपत्तौ युगपदेव वाज्ञानरूपतया परिणमतः ततः कथं मतिपूर्वं श्रुतमुच्यते उक्तं च भाणाभावा वाणियसमकालाइं जउमइसुयाइं पुणो न सुयंमइपुव्वं मइनाणेवायुय भणाणं नैषदोषो यतः सम्यक्त्वोत्पत्तिकाले समकालं मतिश्रुते लब्धिमात्रमेवाङ्गीकृत्य प्रोक्ते तेन तूपयोगं उपयोगस्य तथा जीवस्वाभाव्यतः क्रमेणैव सम्भवात् मतिपूर्वं च श्रुतमुच्यते उपयोगापेक्षया न खलु मत्युपयोगे नासश्चित्य श्रुतग्रन्थानुसारि विज्ञानमासादयति जन्तु स्ततो न कश्चिद्दोषः आह च भाष्यकृत इह लद्धिमइ सुयाइं समकालाइ नतूवउगो सिंमइ पुव्वं सुयमिह पुव्वंसुयमिह पुणसुउवउगोमइप्पभवो १ तथाका लविपर्ययस्वामित्व लाभसाधर्म्यान्मति श्रुतानन्तरमवधिज्ञानमुक्तं तत्र प्रवाहापेक्षया अप्रतिपतितैकसत्वाधारपेक्षया वा नमतिश्रुतयोः स्थितिकाल स्तावानेवावधिज्ञानस्यापि तथा यथैव मतिश्रुतेज्ञाने मिथ्यादर्शनोदयतो विपर्ययरूपतामासादयतस्तथावधिज्ञानमपि तथाहि मिथ्यादृष्टेः सतस्तान्येवमति श्रुतावधिज्ञानानिमत्यज्ञानतया श्रुता ज्ञानविभंग ज्ञानानि भवन्ति उक्तं च आद्यत्रयमज्ञानमपि भवति मिथ्यात्व संयुक्तमिति तथा य एवमति श्रुतज्ञानयोः स्वामी स एवावधिज्ञानस्यापि तथा विभंगज्ञानिनस्त्रिदशादेः सम्यग्दर्शनावाप्तौ युगपदेवमतिश्रुतावधिज्ञानाना लाभसम्भवस्ततो लाभसाधर्म्यं अवधिज्ञानानन्तरं च छद्मस्थ विषयभावप्रत्यक्षत्वसाधर्म्यान्मनः पर्यायज्ञानमुक्तं तथाहि यथावधिज्ञानं छद्मस्थस्य भवति तथामनः पर्यवज्ञानमपीति छद्मस्थसाधर्म्यं तथा यथावधिज्ञानं रूपिद्रव्यविषय तथा मनः पर्यायज्ञानमपि तस्य मनः पुद्गलालंबनत्वादिति विषयसाधर्म्यं तथा यथावधिज्ञानं क्षायोपशमिकभावे वर्त्तते तथा मनः पर्यायज्ञानमपीति प्रत्यक्षत्वसाधर्म्यं उक्तं च कालविपर्ययसामित्तलाभसाहम्मउवही तत्तोमा णसमित्तो छउमत्थविसयभावाइं साहम्मा १ तथामनपर्यायज्ञानान्तरं केवलज्ञानस्योपन्यास सर्वोत्तमत्वात् अप्रमत्तयति स्वामिसाधर्म्यात्सर्वावसाने लाभाच्च तथाहि सर्वाण्यपि मतिज्ञानादिदेशत परिच्छेदकानि केवलज्ञानं तु सकलवस्तुस्तोमपरिच्छेदकं सर्वोत्तमं सर्वोत्तमत्वाच्चान्ते सर्वशिरशिखरकल्पं

उपन्यस्त तथा यथा मनपर्यायज्ञानमप्रमत्तयतेरेवोदयते तथा केवलज्ञानमप्यप्रमादभावमुपगतस्यैव यतेर्भवति नान्यस्य ततोऽप्रमत्तयति साधर्म्य यथायसर्वा
ण्यपि ज्ञानानि समासादयितु यान्य ऽनियमात्सर्वज्ञानावसाने केवलज्ञानमवाप्नोति तत सर्वान्ते केवलमुक्त उक्त च अतेकेवलसुमम जद्दसाभिज्ञावसाण
लाभाश्चोद्दति तथायथामन पर्यायज्ञान न विपर्ययमासादयति तथा केवलज्ञानमपीति विपर्ययाभावसाधर्म्याच्च मन पर्यायज्ञानानन्तर केवलज्ञानमुक्तमिति
कृत प्रसङ्गेन त समासतउविहपन्नत्तमित्यादि सूत्र तत्पञ्चप्रकारमपि ज्ञान समासत संक्षेपेण द्विविध द्विप्रकार प्रज्ञप्त तद्यथेत्युदाहरणोपन्यासार्थं प्रत्य
क्ष परोक्षञ्च तत्रअश्नुतेव्याप्नोति अश्नुते ज्ञानात्मना सर्वानर्थान् व्याप्नोतीत्यक्ष अथवा अश्नाति भुञ्जते अश्नाति सर्वानर्थान् यथा योग उक्तो पालयतिचेत्यक्षो जीव
उभतायौणादिकसक्प्रत्यय त अक्ष जीवप्रतिसाक्षाद्वर्त्तते यत्ज्ञान तत्प्रत्यक्षमिन्द्रियमनो निरपेक्षमात्मन साक्षात्प्रवृत्तिमत् अवध्यादिक त्रिप्रकार उक्त
च जीवो अक्खो अत्यथावण भोयणगुणन्निउ जेणतपइवट्टइनाणं जपच्चक्ख तयतिविह । अयञ्च सुगतानेत्रावध्यादिभेदसूचक तथा अक्षस्यात्मनोद्रव्येन्द्रि
याणि द्रव्यमनश्च पुद्गलमयत्वात्पराणि वर्त्तते पृथक्वर्त्तते इत्यर्थ तेभ्यो यदक्षस्य ज्ञानमुदयते तत्परोक्ष परोदराद्य इति रूपसिद्धि अथवा परैरिन्द्रि
यादिभि उप उक्ष समधो विषयविषयिभावलक्षणो यस्मिन् ज्ञानेन त साक्षादात्मना धूमादग्निज्ञानमिव तत्परोक्ष उभयत्रापि इन्द्रियमनोनिमित्त
ज्ञानमभिधेयमाह इन्द्रियमनो निमित्ताधीन कथ परोक्ष उच्यते पराश्रयत्वा तथाहि पुद्गलमयत्वात्द्रव्येन्द्रियमनो स्यात्मन पृथग्भूतानि ततस्तदाश्रयेणोप
जायमान ज्ञानमात्मनो न साक्षात् किंतु परम्परयेतीन्द्रियमनो निमित्त ज्ञान धूमादग्निज्ञानमिवपरोक्ष उक्त च अक्खस्सपोग्गलमयाज दव्विंदियमणापरो
होति तेहिताज नाणपरोक्खमिहतमणुमाणव अत्र वैशेषिकादय प्राहु नत्वक्षमिन्द्रिय श्रोत्रोद्रूपीक करणाश्रित ततोऽक्षामिन्द्रियाणां साक्षादुपलब्धि
सामत्यक्ष अक्षमिन्द्रिय प्रतिवर्त्ततेइति प्रत्यक्षव्युत्पत्ते तथाच सति उक्तलोके प्रसिद्ध साक्षादिन्द्रियाश्रित घटादिज्ञान प्रत्यक्षमिति सिद्ध तदेतदयुक्तमि

न्द्रियाणामुपलब्धत्वासंभवात्तदसंभवश्चाचेतनत्वात् तथा चात्रप्रयोगः यदचेतनं तन्नोपलब्धयथाघटो अचेतनानिच द्रव्येन्द्रियाणिनचायमसिद्धो हेतुर्यतोनाम द्रव्येंद्रियाणि निर्वृत्त्युपकरणरूपाणि निर्वृत्त्युपकरणे द्रव्येंद्रियमिति वचनात् निर्वृत्त्युपकरणेच पुद्गलमयेयथाचानयोः पुद्गलमयतातथाग्रेवक्ष्यति येपुद्गलमय च सर्व्वमचेतनं पुद्गलाना काठिन्याबोधरूपतयाचैतन्यं प्रतिधर्मित्वायोगात् धर्मानुरूपोहि सर्वत्रापि धर्म्मीयथाकाठिन्यं प्रतिपृथिवी यदिपुनरननुरूपत्वाभावेपि धर्मधर्मिभावा भवेत्तत: काठिन्यजलयोरपिसभवेत् नच भवति तस्मादचेतनाः पुद्गलाः उक्तं च बोहसहावमनिमित्तं विसयपरिच्छेयगंच चेयन्नं विवरियसहा वणियभूयाणि जागप्पसिद्धाणि २ ताधम्मधम्मिभावो कहमेसिंघटद्द तइभूवगमय अणुरूवत्ताभावे काठिन्नजलाणकिन्नभवे २ इतिनापि संदिग्धानैकांतिक ताहेतो शंकनीया अचेतनस्योपलंभकत्वा शक्त्ययोगादुपलंभकत्वं हि चेतनायाधर्म्म स्तत: सकथं तदभावे भवितुमर्हति आह प्रत्यक्षबाधितेयं प्रतिसाक्षा दिन्द्रियाणामुपलंभकत्वेन प्रतीतेः तथाहि चक्षुरूपं गृह्णदुपलभ्यते शब्दं कर्णौनासिकागन्धमित्यादि तदेतन्मोहावष्टब्धा त करणताविलसितं तथाह्यात्मा शरीरेन्द्रियं सहान्योन्यानुवेधेन व्यवस्थितस्ततोयमात्मात्मनिचेद्रियाणीति विवेक्तुमशक्नुवन्तो वालिशजंतवस्तत्रापि युष्मादृशाकुशास्त्रसंपर्कत कुवासना संगमस्तत: साक्षादुपलंभकानींद्रियाणीतिमन्यंते परमार्थत: पुनरुपलब्धा तत्रात्मैव कथमेतदवसीयत इति चेत् उच्यते तद्विगमेपित दुपलब्धार्थानुस्मर णात् तथा ह्विकोपि पूर्वं चक्षुषाविवक्षितमर्थं गृहीतवान् तत कालांतरे दैवविनियोग ततश्चक्षुषोपगमेपि सतमर्थं अनुस्मरति तत्र यदिचक्षु रेव द्रष्टृ स्यात् ततश्चक्षुषोऽभावेतदुपलब्धार्थानुस्मरणं न भवेत् नह्यात्मनासोर्थोनुभूत: किन्तुचक्षुषा चक्षुष एव साक्षाद् द्रष्टृत्वेनापगमात् नचान्ये नानुभूतेऽर्थेऽन्यस्य स्मरणं माप्रापदतिप्रसङ्गः अपिच माभूच्चक्षुषोपगमपिस्तथापि यदिचक्षुरेव द्रष्टृ ततः स्मरणमात्मनो न भवेत् अन्येनानुभूतेर्थेऽन्यस्य स्मरणायोगात् भवति च स्मरणमात्मन: चक्षुष: स्मर्तृत्वेनाप्रतीतेरभ्युपगमाच्च तस्मादात्मैवोपलब्धानेन्द्रियमिति तथा चात्र प्रयोगो योयेपूपरतेष्वपि

नाप्यस्य व्यभिचारानुपलंभादिति निजदौवारिकस्य सादृगुण्यमवगम्य परराष्ट्राजकीय पुरुषसमीचीनतावधारणं परमार्थत: परोक्षतद्वत्मनोपि चक्षुरादिसादृगुण्यावधारणतावस्तु यथात्म्यावधारणं परमार्थत: परोक्षं न क्वचिदमिंद्रियसादृगुण्यावधारणतो वस्तु यथात्म्यावधारणमनभ्यास दशामापन्नस्योपलभ्यते नाभ्यासदशामुपगतस्य अभ्यासदशामापन्नो ह्यभ्यासप्रकर्षसामर्थ्यादिन्द्रियसादृगुण्यमनपेक्षैव साक्षादवबुध्यते ततस्तस्येन्द्रियाश्रितं ज्ञानं कथं प्रत्यक्षं न भवति तदयुक्तं अभ्यासदशामापन्नस्यापि साक्षादनवबोधात्तस्यापीन्द्रियद्वारेणावबोध प्रवृत्तेरवश्यमिन्द्रिय सादृगुण्यापेक्षणात् केवलमभ्यासप्रकर्षवशात्तदिन्द्रियस्यादृगु ण्यझटित्येवावधारयति पूर्ववस्तु च झटित्येव विनिश्चिनोति तत: कालसौक्ष्म्यात्तन्नोपलक्ष्यते इत्थं चैतदंगीकर्त्तव्यं यतो वश्यमवायज्ञानमवग्रहे हा पूर्वं ईहाख्यविचारणात्मिकाविचारयेंद्रियस्यादृगुण्यसङ्गत वस्तुधर्माश्रितोऽन्यतरविचाराभावेऽवायज्ञानस्य समग्रामलत्वायोगात् नखल्विन्द्रिये वस्तुनिभासस्यविचारे तेऽवायज्ञानं समीचीनं भवति ततोऽभ्यासदशापन्ने पीन्द्रियसादृगुण्यावधारणमवसेयं यदपि चोक्तं न खलु देवदत्तो हस्तेन भुंजानो हस्तव्यापारव्यवहितत्वात्साक्षान्नभोक्तेति व्यपदेष्टुं शक्यमिति तदप्ययुक्तं दृष्टान्तदार्ष्टान्तिकार्थवैषम्यात्तथाहि भुजिक्रियानुभवभागी भण्यते भुजिक्रियानुभवश्च देवदत्तस्य न हस्तेन व्यवधीयते किं तु साक्षात् हस्तो हि कवलप्रक्षेपएवव्याप्रियते न परिच्छेदक्रियायामिन्द्रियमिवाहारक्रियानुभवेपि येन व्यवधानं भवेत् तत: साक्षात् देवदत्तो भोक्तेति व्यवह्रियते इह तु वस्तूनामुपलब्धिकर्तात्मा चक्षुरादीन्द्रियसादृगुण्यावगमानुसारेणोपजायते ततो व्यवधानान्न साक्षादुपलम्भक: आत्मेति नन्विदं सर्वमप्ययुक्तं प्रकृष्यमाणे सूत्रे ह्यनन्तरमेवेन्द्रियाश्रितं ज्ञानं प्रत्यक्षमुपदेक्ष्यते पच्चक्खं दुविहंपन्नत्तं तंजहा इंदियपच्चक्खं नो इंदिय पच्चक्खं चेति सत्यमेतत् किं त्विदं लोकव्यवहारमधिकृत्योक्तं न परमार्थत: तथाहि यदिन्द्रियाश्रितमपरव्यवधानरहितं ज्ञानमुदयते तल्लोके प्रत्यक्षमिति व्यवहृतं अपरधूमादिलिङ्गनिरपेक्षतया साक्षादिन्द्रियमधिकृत्य प्रवर्त्तनात् यत्पुनरिन्द्रियव्यापारेणपरं धूमादि

दिकमपेक्ष्याग्न्यादिविषयं ज्ञानमुदयते तल्लोके परोक्षं मत्र साक्षादिन्द्रियव्यापाराभावात् य पुनरत्र इन्द्रियमप्यनपेक्ष्य साक्षादुपजायते तत्परमा र्थत प्रत्यक्ष तच्चावध्यादिकं त्रिप्रकारं ततो लोकव्यवहारमधिकृत्येन्द्रियाश्रितं ज्ञानमनन्तरमुक्तं प्रत्यक्षमुक्तं न परमार्थत अथान्येन अनन्तरं सूत्रेण किमपि विशेषं सूचकं पदमीक्षामहे तत कथमिदमवसीयते सव्यवहारमधिकृत्येन्द्रियाश्रितं ज्ञानं प्रत्यक्षमुक्तं न परमार्थत इति उच्यते उत्तरसूत्रार्थपर्या लोचनात् प्रत्यक्षभेदाभिधानानन्तरं हि सूत्रमाचार्यो वक्ष्यति परोक्षं दुविहं पन्नत्तं आभिणिबोहियनाणं सुयनाणमित्यादि तत्राभिनिबोधकमवग्रहा दिरूपमवग्रहादयश्च श्रोत्रेन्द्रियाद्याश्रिता वर्णयिष्यन्ति तद्दिशो श्रोत्रादीन्द्रियाश्रितं ज्ञानं परमार्थत प्रत्यक्षं तत्कथमवग्रहादयः परोक्षज्ञानत्वेनाभिधीयन्ते तस्मादुत्तरश्रोत्रेन्द्रियाश्रितज्ञानस्य परोक्षत्वेनाभिधानादवसीयते अनन्तरसूत्रेऽभिधीयमानमिन्द्रियाश्रितं ज्ञानं व्यवहारत प्रत्यक्षमुक्तं न परमार्थत इति स्थितं आह च पगतिणपराक्खं लिङ्गियमोहाइयं च पच्चक्खं इंदियमणोभवं जं संववहारपच्चक्खं । अक्षशब्दार्थाद्द्विविधं प्रत्यक्षज्ञानं सांव्यवहारिकं मुख्यं च तत्र सांव्यवहारिकमिन्द्रियानिन्द्रियप्रत्यक्षं मुख्यमतीन्द्रियज्ञानमिति केवलमनोमात्रनिमित्तं श्रुतज्ञानं च लोकेऽपि परोक्षमिति प्रतीतं न विद्यते क्वचि दपि प्रत्यक्षमिति व्यवहृतं ततो न तत्र कश्चिद्विवादः तदेवं प्रत्यक्षपरोक्षं चेति भेदद्वयोपन्यासे कृते सति शिष्यो नवबुध्यमानः प्रश्नं विधत्ते से किं तं पच्चक्खं ति सेशब्दो मागधदेशीयः प्रतिनिर्देशे निपातोऽथशब्दार्थे वर्तते अथ शब्दश्च प्रतिक्रियाद्यर्थाभिधायी यत उक्तं अथ प्रक्रियाप्रश्नानन्तर्यमङ्गलोपन्यासप्रतिवचन समुच्चयेष्विति इह चोपन्यासार्थो वेदितव्यः किमिति परप्रश्ने तत्प्रागुपदिष्टं प्रत्यक्षमिति एवं शिष्येण प्रश्ने कृते सति न्यायमार्गोपदर्शनार्थमाचार्यः शिष्यवचनं द्यनुवादपुरस्सरी करोति प्रतिवचनमभिधातुकाम आह पच्चक्खं दुविहं पन्नत्तमित्यादि एवमन्यत्रापि यथायोगं प्रश्ननिर्वचनं सूत्राणां आपातनिका भावनीया प्रत्यक्षं द्विविधं प्रज्ञप्तं तद्यथा इन्द्रियप्रत्यक्षं नो इन्द्रियप्रत्यक्षं च तत्र इदुपरमैश्वर्ये इदितो नुमिति नुम् तत इदनादिन्द्र आत्मा सर्वद्रव्योपलब्धिरूपपर

मैश्वर्ययोगात्तस्य लिङ्गं चिह्नमविनाभावि इन्द्रियमिन्द्रियमिति निपातन सूत्राद्रूपनिष्पत्तिः तत्द्विधाद्रव्येन्द्रियं भावेन्द्रियं च तत्र द्रव्येन्द्रियं द्विधा निर्वृत्त्युपकरणं च निर्वृत्तिर्नामप्रतिविशिष्टाः संस्थानविशेषाः सापि द्विधा बाह्याभ्यन्तराच तत्र बाह्याकर्णपर्पटकादिरूपासापि विचित्रा न प्रतिनियतरूपतयोपदेष्टुं शक्यते तथाहि मनुष्यस्य श्रोत्रे भ्रूसमे नेत्रयोरुभयपार्श्वतः संस्थिते वाजिनो मस्तकेने तयोरुपरिष्टाद्दाविनीतीक्ष्णेचा ग्रभागे इत्यादि जातिभेदान्नानाविधा आभ्यंतरानुनिर्वृत्तिः सर्वेषामपि जंतूनां समाना तमेवाधिकृत्यान्तनिस्सूत्राणि प्रावर्त्तिषत सोइंदिएणं भंते किं संठाणसंठिए पन्नत्ते गोयमाकलंबुयासंठाणसंठिए पन्नत्ते चक्खूंदिएणं भंते किं संठाण संठिए पन्नत्ते गोयमा मसूरचंदसंठाणसंठिए पन्नत्ते जिब्भिंदिएणंभंते किं संठाणसंठिए पणत्ते गोयमा खुरप्पसंठाण संठिए पणत्ते फासिंदिएणं भंते किं संठाण संठिए पणत्ते गोयमा नाणासंठाण संठिए पणत्ते इह स्पर्शनेन्द्रियनिर्वृत्ते प्रायो न बाह्याभ्यन्तरभेदः सूत्रार्थमूलटीकाया तथाभिधानात् उपकरणं खड्गस्थानीया या बाह्यनिर्वृत्तेर्या खड्गधारासमाना स्वच्छतरपुद्गलसमूहात्मिका आभ्यन्तरानिर्वृत्तिस्तस्याः शक्तिविशेषः इदं चोपकरणरूपं द्रव्येन्द्रियमातरं

इंदियपच्चक्खंच१ नोइंदियपच्चक्खंच२ सेकिंतं इंदियपच्चक्खं इंदिय पच्चक्खं पंचविहंपन्नत्तं तंजहासोइंदियपच्चक्खं १



च्छाननाः इ० होय भेद व०पच्चख्यार त० ते जिम छे तिम कहे छे इ० इन्द्रिया करीने प्रत्यक्षवस्तुने जाणे ते इन्द्रियप्रत्यक्ष१ नो० इन्द्रिया विना जेवस्तु नेजाणे प्रत्यक्षतेना इंद्रीयप्रत्यक्षकहीये से ते अथहिवे किं०किस्युं तं०ते इं०इंद्रियप०प्रत्यक्षभगवंत उतरकहेछे पं०श्रोतेंद्रियादिक पांचविधः प०परुप्या



कह्याछे तं०तेजिमछे तिमकहेछे सो०श्रोतेंद्रियादिककरी सांभलवारूप थकी वस्तुने प्रत्यक्षजाणे च०चक्षुइंद्रीयादिक करी देखाथकी प्रत्यक्षवस्तुनेजाणे

मेचया स्पष्टसंवेदनं स्पष्टसंवेदनप्रोपयर्थ्य मानविनेय: सुखेनावबुध्यते तत: सुखप्रतिपत्तये श्रोत्रेन्द्रियादिकम उक्त: सेकिंतं नो इंदिय पच्चक्खमित्यादि अथ किं तन्नोइंद्रिय प्रत्यक्षंनोइन्द्रियप्रत्यक्षं त्रिविधंप्रज्ञप्तं तद्यथा अवधिज्ञानस्य प्रत्यक्षमित्यादि अथ किंतदवधि ज्ञान प्रत्यक्षमवधिज्ञानं प्रत्यक्षं द्विविधप्रज्ञप्तं तद्यथा भवप्रत्ययं क्षायोपशमिकं च तत्र भवन्ति कर्मवशवर्त्तिन: प्राणिनोस्मिन्निति भवो नारकादिजन्मपुत्राम्नीति अधिकरणे घञ्प्रत्यय: भवएव प्रत्यय: कारणं यस्य तद्भवप्रत्ययं प्रत्ययशब्दश्चेहकारणपर्याय: वर्त्तते च प्रत्ययशब्द: कारणे तत उक्तं प्रत्यया शपथे ज्ञाने हेतुविश्वास निश्चये च शब्द: स्वगतदेवनारकाश्रित: भेदद्वयसूचक: तौ च द्वौ भेदावनन्तरमेव वक्ष्यति तथा क्षयक्षोपशमश्च क्षयोपशमौताभ्या निर्वृत्तं क्षायोपशमिकं



नोइंदियपच्चक्खं नोइंदियपच्चक्खं तिविहंपण्णत्तं तंजहा ओहिनाण पच्चक्खं १ मणपज्जवनाणपच्चक्खं २ केवलनाणपच्चक्खं ३ सेकिंतं ओहिनाणपच्चक्खं ओहिणाणपच्चक्खं दुविहं पण्णत्तं तंजहा भवपच्चइयं च १ खाओवसमियं च २ सेकिंतं भवपच्चइयं



तेअथहिवे किं०कुणनो० इंद्रीना उपयोगविना जाणे प्रत्यक्षप्रमाणे नोइंद्रीप्रत्यक्षना २ ति०त्रिणिप्रकारे प०परुप्या तं०तेजिमछे तिम कहेछे ओ०अवधिग्यान तेहने उपयोगे करी स्वभावे वस्तु छइ तेप्रत्यक्षदेखे १ म०मनपर्यवग्यान करीने म०मननापर्याय प० प्रत्यक्षभासमी विचारणा रूपजाणवा २ के० केवल ग्यान तिणे करीने वस्तुने प्रत्यक्षप्रमाण देखे ३ से० ते अथ हिवे किं० किसुते सिष्य पूछ्यो अहो महात्मा ओ० अवधिग्यान ते केतला प्रकारनाछे तदानंतर गुरुबोल्या अहोवत्स अवधिनाण करी प०प्रत्यक्षदेखवो २ तेहनो दु०प्रकार प०कह्या ते कुण ते सुभने कहो तं० ते जिमछे तिम कहेछे भ०भवप्रत्यय छइ तेतो तिणे भवे जातातो ज्ञान आवस्य[ ]छइवेजख० क्षयोपसमकित भावे छइ तेतो आवरण क्षयकरे घने अण उदयछे

चश्ब्द स्वगतानेकभेदसूचक तत्र यद्येषां भवतितेषामुपदर्शयति दो दोयहमित्यादि द्वयोर्जीव समूहयोर्भवप्रत्यय तद्यथादेवानां च नारकाणां चतत्र दीव्यन्ति
निरुपमक्रीडामनुभवन्तीति देवा तेषां तथा नारकान् कायति शब्दयन्ति योग्यतया अनतिक्रमेणाकारयन्ति जन्तून् स्वस्थानेइतिनारकास्तेषु भवानारकास्ते
षां च शब्द उभयत्रापि स्वगतानेक भेदसूचक ते च सस्थानचिन्तायामग्रे दर्शयिष्यन्ति अत्राह पर मन्ववधिज्ञान क्षायोपशमिके भावे यत्त तेनारकादिभवा
औदयिके तत्कथ देवादीनामवधिज्ञान भवप्रत्ययमिति व्यपदिश्यते नैष दोष यतस्तदपि परमार्थत क्षायोपशमिकमेव केवल सक्षयोपशमोदेवनारकभवे
ष्ववश्य भावी पक्षिणां गगनगमनलब्धिरिव ततो भवप्रत्ययमिति व्यपदिश्यते उक्त च चूर्णौ नणुओही खाउ वसमिए भावेमरगाइभावोस उदइए भावे तउ
कह भवपच्चइउ भण्णइ उच्यते सोविक्खउवसमिउ चेवकिंतु सोच्चेउ खओ नारगदेव भवेसु अवस्स भवइकोदिट्ठ तो पक्खीण आगासगमण चतउभवपच्चइउ
भव इति तथा द्वयो क्षायोपशमिक तद्यथा मनुष्याणां च पञ्चेन्द्रियतिर्यग्जातिजाना च अत्रापि च शब्दो प्रत्येक स्वगतानेक भेदसूचकौ पञ्चेन्द्रियतिर्यग्

भवपच्चइयदुविहे तंजहा देवाणय नेरइयाणय सेकिंत खओवसमियं२ दुविहे तंजहा मणूसाणयपंचिंदिय तिरिक्ख



ते उपसमावी राखे ते क्षय उपसम कहीये २ से०ते अथ किये कि०प्रश्नत० तेभव प्रत्यया १ दु बेप्रकारे प०परुप्या त ते जिमछे तिम कहेछे दे०दव
ताने दिव्यप्रधानभोगछे तेभणी देवनी चोभ गी १ ने०सुभवाक्य वचनथी निगमीनीकल्यामछा आकदशब्दकरे नारकीने दुखभोगवे तेहना प्रवर्त्तना२से०
तेएह भवप्रत्ययकह्यू किंयेक उपसमनीक पुछाकरेछे से०ते अथ किये कि०कुण तेमलीजो वारवार बोले तेशिष्ये पुछ्यो अहो भाडया भावपुत्र ख०क्षयोपस
कितभावस्यु कही तेहना केतलायक प्रकारनोछे तदानतर गुरुबोल्या अहो शिष्यचय उपशमीकना २ दु०बेभेद तैकशी म०सगोगर्भज मनुष्यसम्यग्दृष्टीने

मनुष्याणा चावधिज्ञानं नावश्यंभावि ततः समानेपि क्षायोपशमिके भवप्रत्ययादिदं भिद्येते परमार्थतः पुनः सकलमप्यवधिज्ञानं क्षायोपशमिकं सम्प्रति क्षायोपशमिकस्वरूपं प्रतिपादयति कोहेउ खउवसमियन्ति को हेतुः किं निमित्तं यद्वशादवधिज्ञानं क्षायोपशमिकमित्युच्यते एतन्नि र्वचनमभिधातु काम आह खउवसमियमित्यादि क्षायोपशमिकं येन कारणेन तदावरणीयाना अवधिज्ञानावरणीयाना कर्म्मणामुदीर्णाना क्षयेण अनु दीर्णानामुदयावलिकामप्राप्तानामुपशमेन विपाकोदयविष्कंभणलक्षणेनावधिज्ञानमुत्पद्यते तेन कारणेन क्षायोपशमिकमित्युच्यते क्षायोपशमश्च देशघातिर रसस्पर्द्धकाना उदये सति भवति न सर्वघातिरसस्पर्द्धकाना अथ किमिदं देशघातीनि सर्वघातीनिवारसस्पर्द्धकानीति उच्यते इह कर्म्मणा प्रत्येकमनंता तानि रसस्पर्द्धकानि भवन्ति रसस्पर्द्धकस्वरूपं च कर्मप्रकृतिटीकाया सप्रपञ्चमुपदर्शितमिति न भूयो दर्श्यते तत्र केवलज्ञानावरणीयादिरूपाणा सर्वघाति तिना प्रकृतीना सर्वाण्यपि रसस्पर्द्धकानि सर्वघातीनि देशघातिनीना पुनः कानिचित्सर्वघातीनि कानिचिद्देशघातीनि तत्र यानि चतुःस्थानकानित्रि स्थानकानि वा रसस्पर्द्धकानि तानि नियमतः सर्वघातीनि द्विस्थानकानि पुनः कानिचिद्देशघातीनि कानिचित्सर्वघातीनि एकस्थानकानि तु सर्वाण्यपि

**सूत्र** जोणिआणयकोहेउ खाउवसमियंखाओ वसमियं तयावरणिज्जाणं कम्माणं उदिन्नाणं खएणं अणुदिन्नाणं उवसमे

**भाषा** अने १ पं०पंचेंद्री तिर्यंच संगीपर्याप्ता सम्यग्दृष्टीने मूलगुण उत्तरगुणना क्षयोपसम करी अवधि उपजे को०किस्ये हे०हेते खा० क्षयोपसमिक थी अव धिग्यान उपजे ते०तेहक्षयोपसमी कहीये त०ते अवधिना आवरण जेकर्म एतले ते अवधि ग्याननो आवरण छादनरूपढांकणोछे तेकर्मामध्ये उ०जेउद यआवाछे तेहनोतो ख०क्षयथयोछे तेक्षयकह्याछे अ०अने जेकर्मनो घणा उदयछे तेहनो उ०उपसमभावछे एतले जे उदय आव्या तेहना क्षयथी उदय

स्वभावतो द्विस्थानकस्यैव रसस्य बन्धो नैकस्थानस्य ततः शुभप्रकृतीनां व्यत्यासेनोत्कर्षाद्विस्थानकरसबन्धादारभ्य कर्त्तव्या तथाशुभप्रकृतीनामेकस्थान कस्यापि रसस्य बन्धो भवतीति कथमवसेयमुच्यते इह द्विधाघातिन्योऽशुभप्रकृतयस्तद्यथा सर्वघातिन्यो देशघातिन्यश्च तत्र याः सर्वघातिन्यस्तासां जघन्य पदेऽपि द्विस्थानकएव रसो बन्धमायाति नैकस्थानकस्तथा स्वाभाव्यात्तथाहि क्षपकश्रेण्यारोहेऽपि सूक्ष्मसंपरायगुणस्थानकचरमसमयेऽपि वर्त्तमानस्य केवल ज्ञानावरणकेवलदर्शनावरणयो रसबन्धो द्विस्थानक एवेति नैकस्थानकः यास्तु देशघातिन्यस्तासां श्रेण्यारोहाभावे बन्धमागतानां नियमात्सर्वघातिनमेव रसं बध्नाति यत उक्तं कर्मप्रकृतौ असेढिगायबन्धन्ति यो सव्वघाईणि सर्वघाती चरसो जघन्यपदेऽपि द्विस्थानको दुठाणियाणि मीसाणि देसघाईणि सेसा णीति वचनात्ततो न श्रेण्यारोहाभावे तासामेकस्थानकरसबन्धसंभवः श्रेण्यारोहे त्वनिवृत्तिबादरसंपरायगुणस्थानकाद्धायाः संख्येयेषु भागेषु गतेषु सत्सु तत ऊर्द्धमेकस्थानकरसबन्धसम्भवः तदानीं च ज्ञानावरणचतुष्टय दर्शनावरणत्रय पुरुषवेदान्तरायपञ्चकसंज्वलन चतुष्टयरूपाः सप्तदशप्रकृतीर्व्यतिरिच्य शेषा बन्धमेव नायाति तद्बन्धहेतुव्यवच्छेदात् ततो न तासामेकस्थानरसबन्धसम्भवः सप्तदशानां तु प्रकृतीनां तदा बन्धसंभवादेकस्थानको रसबन्धः प्राप्यते उक्तं च आवरण विग्घ पुंसं जलणंतरायपयडीओ चउठाणपरिणयाओ दुत्ति चउठाणाओ सेसाओ अत्र चउठाणपरिणयात्ति एकस्थानकपरिणताद्विस्थानकपरि णताच्चतुःस्थानकपरिणताश्चेत्यर्थः शेषं सुगमं ततः सप्तदशप्रकृतीनामेकस्थानकरसबन्धसम्भवात्तदपेक्षयाऽशुभप्रकृतीनामेकस्थानकरसबन्धादारभ्य योज नाकृता सर्वघातीनि च रसस्पर्द्धकानि सकलमपि स्वघात्यं ज्ञानादिगुणमुपघ्नन्ति तानि च स्वरूपेण ताम्रभाजनवत् निश्छिद्राणि घृतमिवातिशयेन स्निग्धा नि द्राक्षेवतनु प्रदेशोपचितानि स्फुटिकाभ्रकवच्चातीव निर्मलानि उक्तं च जो घाएइ सविसयं सयलं सो होइ सव्वघाइरसो सो निच्छिड्डो निद्धोतणु ओ फलिहब्भहरविमलो यानि च देशघातीनि रसस्पर्द्धकानि तानि स्वघात्यं ज्ञानादिगुणं देशतो घ्नन्ति तदुदयेऽवश्यं क्षयोपशमसम्भवात्तानि च स्वरूपेणा

नेकविधविवरसङ्कुलानि तथाहि कानिचित्कटवदतिस्थूरच्छिद्रशतसङ्कुलानि कानिचित्कम्बलवन्मध्यमविवरशतसङ्कुलानि कानिचित्पुनरति सूक्ष्मविवरसङ्कुलानि यथा वासांसि तथा तानि देशघातीनि रसस्पर्धकानि स्तोकस्नेहानि भवन्ति वैमल्यरहितानि च उक्तं च देसविघाइत्तणओ इयरो कडकंबलंसुसंकासो विविहबहुछिद्दभरिओ अप्पसिणेहो अविमलोय अघातिनीनां तु रसस्पर्धकानि स्वरूपेण न सर्वघातीनि नापि देशघातीनि केवलं सर्वघातिरसस्पर्धकसम्पर्कतः सर्वघातिरससदृशानि भवन्ति यथा स्वयमचौरा अपि चौरसम्पर्कतश्चौरप्रतिभागाः उक्तं च जाणनविसओघाइत्तणंमि ताणंपि सव्वघाइरसो जायइघाइ सगासेण चोरयावेह चोराणं तदेवमुक्तानि सर्वघातीनि देशघातीनि च रसस्पर्धकानि सम्प्रति यथा क्षयोपशमो भवति तथा भाव्यते तत्र देशघातिनीनां मति ज्ञानावरणीयादिकर्मप्रकृतीनां सर्वघातीनि रसस्पर्धकानि अध्यवसायविशेषतो देशघातीनि कर्त्तुं शक्यन्ते तथा स्वाभाव्यात् कथमेतदवसेयमिति चेत् उच्यते इह यदि कथमपि देशघातीनि रसस्पर्धकानि भवेयुर्नाध्यवसायविशेषतस्तथाविधपरिणमनेनापि तर्हि मति ज्ञानादीनामभाव एव सर्वथा प्राप्नोति तथाहि मत्यादीनि ज्ञानानि क्षायोपशमिकानि उक्तं चानुयोगद्वारेषु खओवसमिया आभिणिबोहियनाणलद्धी खओवसमिया सुयनाणलद्धी खओवसमिया ओहिनाणलद्धी इत्यादि क्षयोपशमश्च विपाकोदयवतीनां प्रकृतीनां देशघातिनामेव रसस्पर्धकाना मुदये भवन्ति न सर्वघातिनां देशघातीनि च रसस्पर्धकानि बन्धमधिकृत्यानिवृत्तिबादरसम्पराया संख्येयेषु भागेषु गतेषु सत्सु तत ऊर्ध्वं प्राप्यन्ते ततस्तस्या अवस्थाया अर्वाक् सर्वथामति ज्ञानादीनि न प्राप्नुवन्ति सर्वघाति रसस्पर्धकविपाको दयभावतः क्षयोपशमा सम्भवात् अस्ति च मतिज्ञानादि बलप्रभावस्तस्या अवस्थाया समाप्ति तत इतरेतराश्रयदोष नैवमत्र सुखोपनिपातित्वाच्च कदाचि दपिमतिज्ञानादिसम्भव अपि च मतिश्रुताज्ञाना चक्षुर्दर्शनान्यपि क्षायोपशमिकानि क्षयोपशमश्च यदिविपाकोदये भवति तर्हि देशघातिरसस्पर्धकानामेव न सर्वघाति रस

स्पर्द्धकाना देशघातीनि च रसस्पर्द्धकानि चालितक्लिशादरसंपरायाङ्कायां ततस्तेषामपि ततोर्वागभाव: प्राप्नोति कथचन घातिरसस्य सर्वजीवानामपिता
मवस्थामप्राप्तानामक्षुमिविद्यन्ते ततोवश्यमेतदुररीकर्त्तव्यं भवन्ति देशघातिनीना प्रकृतीनां सर्वघातीन्यपि रसस्पर्द्धकान्यध्यवसायविशेषतो देशघातीनीति
अथ यथा देशघातिनि रसस्पर्द्धकानि अध्यवसायविशेषतो देशघातीनि भवन्ति तथा सर्वघातिनो: केवलज्ञानावरण केवलदर्शनावरणयोरपि कस्मान्नोप
जायन्ते उच्यते तथा स्वाभाव्यात् तथाहि तथारूपाएव तेपुद्गला: केवलज्ञान केवलदर्शनावरणयोर्योग्यायेरिस्थानकररूपरिणता अपि न देशघातिनो
भवंति नापि तेषां विपाकोदयनिरोधसंभव: शेषाणांतु सर्वघातिप्रकृतीना रसस्पर्द्धकानि भवंत्येवाध्यवसायविशेषतो विपाकोदयविष्कंभभाजि तथा स्वाभा
व्यादेतच्चावसीयते तथाकार्यदर्शनात्तथाहि सम्यक्त्वसम्यग्मिथ्यात्व देशविरतिसामायिकच्छेदोपस्थापन परिहारविशुद्धिक सूक्ष्मसंपरायसंयमा: क्षायोप
शमिका उपवर्ण्यते यतउक्तं खओवसमियासम्मदंसण लद्धी उवसमियासम्मामिच्छद्द सणलद्धी खओवसमिया सामाइयलद्धी खओवसमियाच्छे
ओवट्ठावणलद्धी एवं परिहारविसुद्धीयलद्धी सुहुमसंपरायलद्धी खओवसमियाचरित्ताचरित्तलद्धी इति अन्यत्राप्युक्तं मिच्छत्तजमुइन्नंतं खीणं
अणुइन्नंतस्खीणं अणुइयं च उवसंतं मीसीभावपरिणयं वेएज्जंतं खओवसमं तथा अनयत्यप्रथमयतिचा प्रत्याख्यानाह्वत: कषाया स्तान् स ततो
येन भवेत्तस्य विरमणो वुद्धिकल्पाच्छेदोपस्थाप्य वा हन्त सामायिकं चरित्र वा स ततो लभते प्रत्याख्यानावरणक्षयोपशमात् क्षयोपशमश्च
भवति विपाकोदयनिरोधे ततोऽवसीयते भवन्ति मिथ्यात्वाप्रत्याख्यान प्रत्याख्यानावरणादीना सर्वघातिप्रकृतीना सर्वघातीनि रसस्पर्द्धकान्यध्यवसायविशे
षतोविपाकोदयभावयुक्तानीति इतं प्रसंगेन तत्रावधिज्ञानावरणप्रकृतीनां तथाविधविशुद्धाध्यवसाय भावत: सर्वघातिषु रसस्पर्द्धकेषु देशघातिरूप
तयापरिणमितेषु देशघातिरसस्पर्द्धकेष्वपि घातिस्निग्धे स्वल्परसाकृतेषु उदयावलिकाप्राप्तस्यांशस्य क्षयेनुदीर्णस्यचोपशमे विपाकोदयविष्कम्भरूपे जीव

यस्या सावनगार: परित्यक्तद्रव्यभावग्रन्थ इत्यर्थ: तस्य मयशो व्यध्यवसायेषु वर्त्तमानस्य सर्वघातिरसस्पर्द्धकेषु देशघातिरसस्पर्द्धकेषु देशघातिरसस्पर्द्धकतया जातेषु पूर्वोक्तक्रमेण क्षयोपशमभावतो वधिज्ञानमुपजायते मन: पर्यायज्ञानावरणीयस्य तु विशिष्टसंयमाप्रमादादिप्रतिपत्तावेव सर्वघातीनि रसस्पर्द्धकानि देशघातीनि भवन्ति तथा स्वाभाव्यात्तस्य तथा स्वाभाव्यं बन्धकाले तथा रूपाणामेव तेषां बन्धनात् ततो मन: पर्यवज्ञानं विशिष्टगुणप्रतिपन्नस्यैव वेदितव्यं मतिश्रुतावरणचक्षुर्दर्शनावरणान्तराय प्रकृतीना पुन: सर्वघातीनि रसस्पर्द्धकानि येन तेन वाध्यवसायेनाध्यवसायानुरूपं देशघातीनि रसस्पर्द्धकानि भवन्ति तेषां तथा स्वाभाव्यात्ततो मत्यावरणादीना सदैव देशघातिनामेव रसस्पर्द्धकानामुदय: सदैव च क्षयोपशम: उक्तं च पञ्चसंग्रहमूलटीकायां मतिश्रुतावरणचक्षुर्दर्शनावरणान्तराय प्रकृतीनां च सदैव देशघातिरसस्पर्द्धकानामेवोदय: ततस्तासां सदैवौदयिकक्षायोपशमिकौ भावाविति कृतं प्रसङ्गेन तं समासओ इत्यादि त दवधिज्ञानं समासत: संक्षेपेण षड्विध षट्प्रकारं प्रज्ञप्तं तद्यथा आनुगामिकमित्यादि तत्र गच्छन्तं पुरुषमासमंतादनुगच्छत्येवं शीलमानुगामिकमानुगाम्येवानुगामिकं स्वार्थेक: प्रत्यय: अथवानुगम:प्रयोजनं यस्य तत् आनुगामिकं यल्लोचनवत् गच्छन्तमनुगच्छति तदवधिज्ञानमा

मूल

आणुगामियं१ अणाणुगामियं२ वड्ढमाणयं३ हीयमाणयं४ पडिवाईयं५ अपडिवाईयं६ सेकिंतं आणुगामियंओहिनाणं

भाषा

ज्याके अ०एहवा अणगार साधु तेहना व्रतामेकादि आगाररहित साधुने उ०अवधि ग्यान स०उपजे तं०तेहना बली स०समुचय संक्षेपे सामान्यथी छ०छप्रकारे प०प्रकूप्या तं०तेकहेछे तिमछे आ०आणुं ग्रामिकते जिहां जाइ तिहां साथे आवे तिमजजाणो देखे तेभूमि मकतो आवे तिहा नदेखे अ०जि णोखेत्रे आवे ग्यान उपनो तिहाज आवतो वली जाणे देखे अने अन्यखेत्रसायेन आवे व०दिनर प्रतेम्यासना पर्यायद्वृयाइ ते अवध्यसाय रूपकरीने हा०

नुगामिकमिति भाव तथा न आनुगामिकं अनानुगामिकं शृङ्खलाप्रतिबद्धप्रदीपइव यन्नगच्छन्तमनुगच्छति तदवधिज्ञानमनानुगामिकं चानानुगामिको णुगच्छइ गच्छन्त सोयणा जत्ता पुरिस इयरोठनाणुगच्छइट्ठिपइवोव्व गच्छन्त तथा वर्द्धत इति वर्द्धमान तत स्वार्थे कन् प्रत्यय वर्द्धवर्द्धतर धनप्रचुरेन्धनप्रक्षेपादिभिर्वर्द्धमानदहन ज्वालाकलापइव पूर्वावस्थातो यथायोग प्रशस्त तरध्यवसायभावतोऽभि वर्द्धमानमवधिज्ञानं वर्द्धमानकं प्रशस्तत् विशिष्टगुण विशुद्धिसापेक्षत्वात् तथा क्षीयते तथाविध सामग्र्यभावतो हानिमुपगच्छति क्षीयमान कर्मकर्तृ विवक्षायामानश्प्रत्यय क्षीयमानमेव क्षीयमानकं कुत्सिता स्याख्याते इति क प्रत्यय पूर्वावस्थातोऽधोऽधो ह्रासमुपगच्छत्यवधिज्ञानं तत क्षीयमानकमिति भाव उक्तं च क्षीयमाण पशावस्थाओ अहोऽहो ह्रसमाणं इति तथा प्रतिपतनशील प्रतिपातीति यत उत्पन्न सत् क्षयोपशमानुरूप कियत्काल स्थित्वा प्रदीप इव सामस्त्येन विध्वंसमुपयाति तत् प्रतिपातीत्यर्थ क्षीयमानकप्रतिपातिनो क प्रतिविशेष इति चेदुच्यते क्षीयमानकं पूर्वावस्थातो धोधो ह्रासमुपगच्छदभिधीयते यत्पुन प्रदीपइव निर्मूलमेककालमपगच्छ ति तत्प्रतिपाति तथानप्रतिपाति यत केवलज्ञानादर्वाक् भ्रंशमुपयाति तदप्रतिपातीत्यर्थ आह आनुगामिकानानुगामिकरूपभेदद्वये एव शेषभेदावर्द्धमान कादयोऽन्तर्भावयितुं शक्यन्ते तत्किमर्थ तेषामुपादान उच्यते यद्यप्यन्तर्भावयितुं शक्यन्ते तथाप्यानुगामिकमनानुगामिकं चेत्युक्ते न वर्द्धमानकादयो विशेषा अवगन्तु शक्यन्ते ते विशेषावगमकारणाय च प्रवृत्तो शास्त्रारम्भप्रयास स्ततो विशेष ज्ञापनार्थं विशेषभेदोपन्यास इत्यदोषः सेकितमित्यादि अथ किं तत् आनुगामिकमवधिज्ञानं आनुगामिकमवधिज्ञानं द्विविधं प्रज्ञप्तं तथा अन्तगतं च मध्यगतं च इहान्तशब्द पर्यन्तवाची यथावनान्ते इत्यत्र ततश्चान्ते पर्यन्ते गतं व्यवस्थितं अन्तगतं इदमत्र व्याख्या अन्तेगतमात्मप्रदेशानां पर्यन्तेऽवस्थितं अन्तगतं इयमत्र भावना इहावधिरुत्पद्यमानः को ऽपि स्पर्द्धकरूपतयोत्पद्यते स्पर्द्धकं च नामावधिज्ञानप्रभाया गवाक्षजालादिद्वारविनिर्गतप्रदीपप्रभाया इव प्रतिनियतो विच्छेदविशेष तथाचाह जिनभद्र

गणितमात्रमयाः स्वोपज्ञभाष्यटीकायां स्पर्द्धकमवधिच्छेदविशेष इति तानिचैकजीवस्य संख्येयान्यसंख्येयानि भवन्ति यतउक्तं मूलावश्यक प्रथमपीठिकायां फड्डाय असंखेज्जासंखेज्जे याविएगजीवस्से ति तानि च विचित्ररूपाणि तथाहि कानिचित्पर्यंतवर्त्ति आत्मप्रदेशेषूत्पद्यंते तत्रापि कानिचित् पुरतः कानिचित् पृष्ठतः कानिचिदधोभागे कानिचिदुपरितनभागे तथा कानिचिन्मध्यवर्त्ति ष्वात्मप्रदेशेष्ववधिज्ञानमुपजायते तदात्मनोते पर्यंतेस्थितमिति कृत्वा अंतगतमित्युच्यते तैरेवपर्यंतवर्त्तिभिरात्मप्रदेशैः साक्षादवधिरूपेण ज्ञानेन ज्ञानात्मामेदैरिति अथवा औदारिकशरीरस्यांते गतं स्थितं अंतगतंकयाचिदेकदिशोपलम्भात् इदमपि स्पर्द्धकरूपमवधिज्ञानं अथवा सर्वेषामप्यात्मप्रदेशाना क्षयोपशमभावेपि औदारिकशरीरांतेनैकयादिशायद्वशादुपलभ्यते तदप्यन्तगतं आह यदि सर्वात्मप्रदेशाना क्षयोपशमस्ततः सर्वतः किंनपश्यन्ति उच्यते एकदिशेच क्षयोपशमसंभवात् विचित्रोहि क्षयोपशमस्ततः सर्वेषामप्यात्मप्रदेशानामित्थंभूत एव स्वसामग्रीवशात्क्षयोपशमः संजातोयदौदारिकशरीरमपेक्ष्यकयाचिद्विवक्षितयैकयादिशापश्यतीति उक्तं च चूर्णौ ओरालियसरीरंतेठियंगयं



आणुगामियंओहिनाणंदुविहंपण्णत्तंतंजहा अंतगयंच मज्झगयंच१सेकिंतंअंतगयंअंतगयंतिविहंपण्णत्तं पुरओअंतगयं



अ० ते उपनो दिन २ प्रते चाणि पामे जीण अध्यवसाय करीने ४ प० उपनापछे केतलु एककाल रहे पछे ततकाल पडे अध्यवसायकरी ५ अ० ते उपनो थको न जाइ केवल ग्यान उपजावे पछे ६ तेजीव थकी जाइ से० तेजिहा जाइ तिहा साथे आवेते आ० अवधि ग्यानगुरु उतरकहेछे हे गोतम आ०साथे आवेते अणुगामिकउ० अवधिग्यानना दु०बे प्रकार प०परुप्याकह्या तं०तेजिमछे तिम कहेछे अं०जीवप्रदेशा अंतिजाणे देखेते १ म० जीवना प्रदेशमध्यथी जाणे देखे से०ते अथहिवे कि०कुण अंतगतनोभेद स्वामी उतरकहेछे अं०अंतगतना ति०त्रिणप्रकार प०परुप्या तं०तेजिमछे तिमकहेछे

तिएगट्ठ तचायप्पएसफट्टगापच्छिएगदिसोवलभाचय अतगयसोच्चिनाणमन्नइ अहवा सव्वायप्पएसेसुविसुद्धि सुवि ओरालियसरीरग तेणएगदिसिपासणा गयति अतगयमन्नइ तृतीयोर्थ एकादिग्भाविना तेनावधिज्ञानेन यद्द्योति तत्क्षेत्र तस्यान्तेवर्त्ते तदवधिज्ञानमवधिज्ञानवतस्तदन्ते वर्त्तमानत्वात् ततोऽन्त एकदिग्रूपस्यावधिज्ञानविषयस्य दर्शते अवस्थितमतगत चशब्दोऽयमनेकभेदसूचक तथामध्यगत चेति इहमध्य प्रसिद्ध दण्डादिमध्यवत् ततो मध्य गत मध्यगत इदमपि त्रिधाव्याख्येय च आत्मप्रदेशानां मध्ये मध्यवर्त्तिष्वात्मप्रदेशेषु गत स्थित मध्यगत इदंच स्पर्द्धकरूपमवधिज्ञान स र्वदिगुपलम्भकारण मध्यवर्त्तिनाम आत्मप्रदेशानामवसेय अथवा सर्वेषामप्यात्मप्रदेशाना क्षये पशमभावेऽप्यौदारिकशरीरमध्यभागेनोपलब्धिरन्तर्मध्यगत यदा चूर्णौ उरालियसरीरमज्झे फड्डगविसुद्धीओ सव्वाइपएसविसुद्धीउवासव्वदिसोवलभत्तण ओमज्झगओत्तिभन्नति अथवा तेनावधिज्ञानेन यद्द्योतितक्षेत्र सर्वासुदिक्षु तस्य मध्ये मध्यभागे गत स्थित मध्यगतमवधिज्ञानिनस्तद्द्योतित क्षेत्र सर्वासुदिक्षुतस्य मध्ये मध्यभागेगतमध्यवर्त्तित्वात् आह च चूर्णिकृत् अहवा उवलद्धिखेत्तस्स अवदिसु दसोमज्झगओत्ति अतोयामज्झगयोओहीभन्नइति च शब्द स्वगतानेकभेदसूचक सेकितमित्यादि अथकितत् अतगत अन्तगतत्रिविधंत्रिप्रकार प्रज्ञप्त तद्यथा पुरओ अतगतमित्यादि तत्र पुरतोऽवधिज्ञानिन स्वापेक्षया अग्रभागे अतगतपुरतोऽतगत तथामार्गत पृष्ठतोऽतगत तथापार्श्वतोऽथो पार्श्वयोरेकतरपार्श्व तोऽतगत पार्श्वतोऽतगत अथ कितत् पुरतोतगत सेजहेत्यादि सविवक्षितो यथानामक कश्चित्पुरुष



मज्झओअतगय२ पासओ अतगय ३ सेकित पुरओअतगय पुरओ अतगय सेजहानामए केइपुरिसेउक्का वाचुडलि



पु०आगलाअतगतनो प्रदेशाकरी तेजाणवा म पाछिला तेप,छलापासाना प०अतगतना प्रदेशाकरीने जाणे २ पा०बिहु पासाना अतगतनाजीव

अतसर्वेष्वपिपदेष्वेकारात्तत्वमेत्वमत: सोपुसीतिमागधिक भाषालक्षणात् सर्व्वमपिहि प्रवचनमर्द्ध मागधिक भाषात्मकमर्द्ध मागधिकभाषयातीर्थकृतां देशना प्रवृत्ते: तत: प्राय: सर्वत्रापि मागधिकभाषालक्षणमनुसरणीयं उल्काबेति उल्का दीपिका वा शब्द: सर्वोपि विकल्पार्थ: चटुली वा चटुलीपर्यंत ज्वलित तृणपूलिका अलातं वा अलातमुल्मुकं अग्रभागे ज्वलत्काष्ठमित्यर्थ: मणिर्वामणि: प्रतीत: ज्योतिर्वाज्योंति: शरावाद्या धारोज्वलन्नग्नि: आहच चूर्णिकृत्गो इत्ति मल्लगाइ' ठिउ अगणीजलतो इति प्रदीपं वा प्रदीप: प्रतीत: पुरतोऽग्रतो हस्ते दण्डादौ वा कृत्वा पणोल्लेमाणोत्ति प्रणुदन्२ हस्तस्थितं दण्डा ग्रावस्थितं वा क्रमेण स्वगत्यनुसारत: प्रेरयन्२ गच्छेत् यायात् एष दृष्टांत: उपनयस्तु स्वयमेव भावनीय: तत उपसंहरति सेतं पुरओ अंतगतं से शब्द:

यंवा अलायंवा मणिंवा पईवंवा जोइ'वा पुरओकाउ' पणुल्लेमाणे २ गच्छिज्जा सेतंपुरओ अंतगयं सेकिंतंमग्गओअं तगयं मग्गओ अंतगयं सेजहानामए केइपुरिसे उक्कंवा चुडलियंवा अलायंवा मणिंवा पईवंवा जोइ'वा मग्गओ





नाप्रदेशा करीने जाणे से० ते अथ किवे किं० कुणकेहो पु० आगलि थकी अंतगत गुरुतर कहे छे पु० आगला अंतप्रदेसा थी जाणे से० तेज० यथा दृष्टांते ना० नाम इति संभावनाइ के० कोइ एक पु० पुरुष उ० दीवाचराक चु० पूलोछे इडेंवलतो हाथे ग्रहे तथा डाडे च० उवाडो वा० अथवा प० दीवोवा० अथवा म० मणीरत्नविशेषवा० अथवा जो० सरावलामध्ये बलती अग्निप्रते पु० आगलिकरीने पणे ठेलतो थको उठेलतो थको २ ग० जाइचाले ते यागलीज वस्तुदेखे पणि अनेरीने न देखे तिम रुचकप्रदेशा थकी आगली जीवना प्रदेशा थी देखे से० ते आगली अन्तगत अवधिग्यान कह्यौ से० अथ किवे किं० काहो म० पाछला जीवना प्रदेशा थकी अं० अंतगत देखे ते म० जीवना पाछिला अंतगत प्रदेश थकी देखे ते अवधिग्यान

शिरसि कृत्वा गच्छेत्तदेतन्मध्यगतं दृष्टमत्र भावना यथा तेन मस्तकस्थेन सर्वासुदिक्षु पश्यति एवं येनावधिज्ञानेन सर्वासु दिक्षु पश्यति तन्मध्यगतमिति व्युत्पत्तिभूता च व्याख्या सम्यगनवबुध्यमानः शिष्यः प्रश्नं करोति अंतगतस्य मध्यगतस्येत्यादि अंतगतस्य मध्यगतस्य च परस्परं कः प्रतिविशेषः प्रतिनियतो विशेषः सूरिराह पुरओ इत्यादि पुरतोऽन्तगतेनावधिज्ञानेन पुरत एवाग्रत एव संख्येयानि एकादीनि शीर्षप्रहेलिकापर्यन्तानि असंख्येयानि वा योजनानि एतावत्सु योजनेष्ववगाढं द्रव्यमित्यर्थः जानाति पश्यति ज्ञानं विशेषग्रहणात्मकं दर्शनं सामान्यग्रहणात्मकं तदेवं पुरतोऽन्तगतस्य शेषावधिज्ञानेभ्यो भेदः

अंतगदं सेतं अंतगयं से किं तं मज्झगयं मज्झगयं से जहा नामए केइ पुरिसे उक्कं वा चुडलियं वा अलायं वा मणिं वा पईवं वा जोइं वा मत्थए काउं समुव्वहमाणे२ गच्छिज्जा सेतं मज्झगयं अंतगयस्स मज्झगयस्स को पइविसेसो पुरओ अंतगएणं ओहिना णेणं पुरओ चेव संखिज्जाणि वा असंखिज्जाणि वा जोयणाइं जाणइ पासइ पासओ अंतगएणं ओहिनाणेणं पासओ

पाषाणतीनो अंतगत अवधि ग्यान कह्यो । से० ते अथ शिष्य कि० केहवो म० मध्यगत जीवना प्रदेश थकी अवधि ग्यान उपजे से० तेज० यथा दृष्टांते ना० नाम इति संभावनाइ के० कोइएक पु० पुरुष उ० दीवी चोराग अथवा चु० पूलो छेहडे बलतो हाथमांहि अ० उवाडो अथवा प० दीवो वा अथवा म० मणिनामा रत्नविशेष जो० सरावला मांहि बलती अग्नि म० दीवा आदिजमाहिला कोइक जोति मस्तक उपरि स० चढावे चढावीने ग० जाइ से० तिम एहमध्यगत अवधिग्यान कही जाणे अं० अंतर्गत ते पाषाणतीना जीवना प्रदेशाथकी अवधि ग्यान उपजे म० मध्यगतनाजीवना प्रदेश थकी अवध ग्यान उपजे ते बेहुमध्ये को० दीवादीकनो केहवो उ० विशेष फेर कुणगो०हे गोतम पु०जे आगलिथी उपजे अं० अंतगत उ०अवधि ग्याननो धणी अव

